अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–१५

# संस्कृतायनम्

डॉ. तन्मयकुमारभट्टाचार्यः

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 15

# संस्कृतायनम्

डॉ. तन्मयकुमारभट्टाचार्यः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

**2020**

शीर्षकम् — संस्कृतायनम्

लेखकः — डॉ. तन्मयकुमारभट्टाचार्यः

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — **2020**

आवृत्तिः — प्रथमा

मूल्यम् — **190.00**

आय.एस.बी.एन. — 978-8183-153-812

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

मुद्रकः — एस.के.प्रिन्टर्स, दिल्ली

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.
तथा
न्यु भारतीय बुक कार्पोरेशन, नवी दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success. My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

**सरस्वती श्रुतिमहती महीयताम्**

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**$100^{th}$ Year $50^{th}$ Session**
**$10^{th}$-$12^{th}$ January, 2020**

## Chief Patron

Hon'ble Nitin Gadkari

Minister of Road, Transport & Highways of India

## Patron

Prof. Srinivasa Varakhedi

Vice Chancellor, KKSU, Ramtek

## AIOC President

Prof. Gautam Patel

Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary

Prof. Saroja Bhate

Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary

Prof. Penna Madhusudan

Dean, KKSU, Ramtek

## Additional Local Secretary

Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee

Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# संस्कृतायनम्

(संस्कृतगौरवप्रख्यापकानां प्रबन्धानां सञ्चयः)

**लेखकः**

**डॉ.तन्मयकुमारभट्टाचार्यः**

सहायकाचार्यः, प्राच्यविद्याविभागः

संस्कृतमहाविद्यालयविश्वविद्यालयः,

कोलकाता (पश्चिमवङ्गाः)

**प्रकाशकः**

**कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः**

**रामटेक**



**मुद्रकः**

**कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः**

**रामटेक**

**प्रथमं संस्करणम्-** 2019

**प्रतयः-** 500

**मूल्यम्** -

ISBN:

# आमुखम्

संस्कृतस्य प्रायोगिकदिशां विचारप्रसङ्गे जातीयस्तरे बहुश्रुतं नाम श्रीतन्मयकुमारभट्टाचार्यवर्यस्य। १९७१ ईशवीयसंवत्सरे मार्चमासस्य सप्तमे दिनाङ्के तस्य जन्म भारतस्य पूर्वराजधान्यां तथा आङ्ग्लानां मूलकेन्द्रे। पितृपितामहामातमहादयस्तस्य सर्वेऽपि संस्कृतसाहित्यधुरन्धराः शास्त्रपरम्परारक्षणशीलाः ग्रन्थग्रथनपरायणाः कर्मकाण्डप्रवीणाश्चासन्। परन्तु तदा स्वाधीनेऽपि भारतदेशे जनाः विदेशीभाषोन्मुखाः आङ्ग्लभाषां बहुमन्यमानाः तेनैव आत्मगौरवं सम्पादयन्ति स्म। किन्तु भट्टाचार्यमहोदयः पूर्वजानामैतिह्यमनुसृत्य पारम्परिकसंस्कृतस्य पठनपाठने प्रचारप्रसारे च नितरां सुदक्षोऽयं प्रायोगिकं संस्कृतं नीत्वापि परीक्षां निरीक्षां कृतवान्। उत्कलेषु वङ्गेषु च संस्कृतप्रचारक्षेत्रे तदा तदा स्मृतोऽयं जनः। संस्कृतस्य व्यावहारिकपक्षम् अवलम्ब्य तस्य विशेषाध्यनं वर्तते इति तस्य भाषणात् ज्ञायते। तथाविधं तस्य भाषणपञ्चकमत्र स्थानितं पुस्तकाकारेण च प्रकाशितं दृष्ट्वा नितरां प्रसीदामि।

'विश्वसंस्कृतौ स्वामिनो विवेकानन्दस्य योगदान'विषये आचार्यस्य रमारञ्जनमुखोपाध्यायस्य मार्गदर्शनेन गवेषणां कृतवान्। सोऽपि ग्रन्थः अधुना प्रकाशितोऽस्ति यत्र स्वामिनो विश्वबन्धुत्वभावना विशदीकृता। काश्चन रवीन्द्रकथा एतेन अनूदिता याः कवीन्द्रकथाकल्लोलिनी ग्रन्थे प्रकाशिताः। सरलतरलसंस्कृतस्य आधुनिकशैल्या प्रचुरप्रचाराय अस्याभिनिवेशः श्लाघनीयोऽस्ति। बहुश्रुतस्य बहुपाठिनोऽस्य प्रबन्धा यथा ज्ञानगर्भाः काव्यानि तथा रसमयानि उत्प्रेरकाणि च सन्ति। नूतनस्य सुसंस्कृतस्य समाजस्य सामरस्यसंस्थापने कवेर्लेखनी प्रतिश्रुतिबद्धा वर्तते। प्रेक्षन्तु प्रेक्षावन्तः देशे सत्सु अपि सभ्यजनेषु दुर्नीतिः कथं शिखरं प्राप्ताऽस्ति-

देशेऽधुना प्रचलिता गणतन्त्ररीतिर्नीतिच्युता विकशिता खलु राजनीतिः।
मिथ्या प्रवञ्चनरता प्रगतिर्विभाति दुर्नीतिरुन्नतिपदं कथमत्र याति॥

तुकान्तपदैरन्त्यानुप्रासैर्वा विश्ववन्दिताया देशसंस्कृतेः स्तावकः अग्रे स्नेहसौहार्दमूला सरलतैव विनष्टेति कारणं योजितं कविना–

स्नेहो न पूर्ववदिहास्ति परस्परस्य स्वार्थान्वितो बहुरहो नहि सत्यनिष्ठा।
दूरङ्गता सरलता बहुमानितानां दुर्नीतिरुन्नतिपदं कथमत्र याति॥

अन्तिमं किन्तु अमोघमस्त्रं वर्णयति कविः, यदर्थं दुनीतेर्लीला लीलायिता–

नामास्तु धर्मनिरपेक्षमिदं हि राष्ट्रं सङ्घालघुः किल गुरुर्भवति प्रलुब्धः।
भोटाख्यरत्नवसनं परिवर्द्धते हि दुर्नीतिरुन्नतिपदं कथमत्र याति॥

अन्यत्र विश्ववन्दितां देशसंस्कृतिं विभावयति काव्यकारः प्रत्येकं देशस्य स्वदेशसंस्कृतिरेव प्रशस्येति इति कथमपि अविस्मरन्–

स्ववर्णग्राह्या निजदेशवर्तिनी परेण निन्द्यापि स्वशक्तिदायिनी।
विदेशसंस्कारकथा यथा तथा मदीयचिन्ता महती स्वसंस्कृतिः॥

सत्यमेवोक्तं कविना संस्कृतिहीनदेशः शववदिति –

धनं प्रशस्तं विपुलं पृथिव्यां जनेषु च मान्यतया विराजितः।
तथापि सः जीवनहीनदेहवद् विभाति लोके निजत्यक्तसंस्कृतिः॥

अयं संस्कृतसंस्कृतिसंरक्षणतत्परो युवकविः समीक्षकः लेखकः इतोऽपि प्रबन्धान् विलिख्य प्रेरयतु लोकान्। संस्कृतायनमिति ग्रन्थोऽस्य वाचकैरभिनन्दितो भवतु इति कलिकाताकालिकायाः पदयोः सम्प्रार्थ्य विरमामि विस्तरात्।

**डॉ.नारायणदाशः**
संस्कृतविभागाध्यक्षः,
रामकृष्णमिशनावासीयस्वयंशासितमहाविद्यालयः,
नरेन्द्रपुरम्, कोलकाता-७००१०४ (पश्चिमवङ्गम्)



# मनोगतम्

संस्कृते भाषणं सरलम्। परन्तु भाषणेन किमपि न भवति। संस्कृतज्ञानं केवलम् अन्येषामुपदेशाय न, अपि तु जीवने अन्वयाय। संस्कृतापप्रचारविषमूर्च्छिताः संस्कृतज्ञाः मध्ये मध्ये दिग्भ्रान्ताः भवन्ति। आधुनिकयुगे संस्कृतस्य यथायथं सन्दर्शनं निरूपणं वा बहुभिः न कृतमेव। अतः मन्मत्यनुसारं यथाध्ययनं मे, तद्रीत्या संस्कृतस्य सामान्यं स्वरूपमत्र विवृतमस्ति। तद्यदि विश्वतोमुखं विश्वरूपं वा संस्कृतस्येति कोऽपि स्वीकरोति, तत्तु अहोभाग्यं मम।

संस्कृतायनमित्ययं ग्रन्थः अधुना प्राच्यविद्यासम्मेलनस्य आयोजनावेसरे कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयपक्षतः प्रकाश्यते इत्यहं तस्य आधमर्ण्यं वहामि। तदर्थं योग्याः कुलपतयः श्रीनिवासवरखेडिमहोदयाः सर्वेऽपि आचार्याश्च धन्यवादैर्विभूष्यन्ते। विशेषतः आचार्याः मधुसूदनपेन्नामहोदयाः अस्माकं क्षुल्लकं कार्यं प्रकाशनाय स्वीकुर्वन्तीति गौरवं तु संस्कृतमातुरेव। तेषां कृते कार्तज्ञ्यं ज्ञापयामि। मित्रमणयः नारायणदाशमहोदयाः आमुखेन ग्रन्थमुखं व्यभूषयन्निति प्रणयवचनैः स्वागतं व्याहरामि। संस्कृतलोकः आत्मानं विज्ञाय प्राच्याविद्यायाः प्रचुरप्रचाराय मतिं विदधातु इति जगदीश्वरं प्रार्थये।

**विदुषां वचनेस्थितः**
**तन्मयकुमारभट्टाचार्यः**



# सूचीपत्रम्





# संस्कृतशिक्षणसम्बन्धिनः पाठ्यक्रमस्य विषये किञ्चित् निवेदनम्

संस्कृतशिक्षणस्य उद्देश्यानि एतानि सन्ति यद् अनेन संस्कृतवाङ्मयस्य ज्ञानं स्यात्, तस्य अध्ययने गतिर्भवेत्, अध्ययनार्थं च मतिर्भवेत्। परन्तु वर्तमानपाठ्यक्रमेण अस्य उद्देश्यस्य पूर्त्तिर्न जायते। छात्राः केवलं निर्धारितपाठान् एव पठित्वा तेषाम् अपि वङ्गभाषायाम् आङ्ग्लभाषायां वा अनुवादं कृत्वा संस्कृताध्ययनस्य 'इतिश्रीः' इति मन्यन्ते। यदि कुतोऽपि तेषां समक्षम् अपठितांश आगच्छेत् तर्हि ते तस्याध्ययनं कृत्वापि अर्थमवगन्तुं न शक्नुवन्ति। पठितांशानामपि पद्यानां वाचनस्य तु अतीव दुर्दशा एव भवति। एवमेव संस्कृतेन विचाराणामभिव्यक्तौ तु शिक्षकाः व्याख्यातारश्च काठिन्यमनुभवन्ति। अतः आश्यकता अस्ति न केवलं साहित्यस्य काव्यांशाः अथवा शास्त्राणाम् एव कतिचन अंशाः पाठ्यक्रमे निर्द्धारिताः भवेयुः, अपितु प्रमुखोद्देश्यं भवेत् तथाविधायाः दक्षतायाः विकासः येन छात्राः सम्यक् भाषां ज्ञात्वा संस्कृतवाङ्मयावगाहनं कर्त्तुं समर्थाः भवेयुः संस्कृतशिक्षणं नाम तत्र भाषाशिक्षणं, साहित्यशिक्षणं, शास्त्रशिक्षणं वेदशिक्षणञ्चेति चत्वारः भागाः सन्ति। तथापि अस्माभिः सोपानक्रमेण एकैकं कार्यं साधनीयम्। अस्माभिः सर्वैः भाषाशिक्षणाय एव अधिकम् अवधानं दातव्यम्। कारणमित्युक्ते, संस्कृतम् अपि काचित् 'भाषा'। या भाष्यते सा एव 'भाषा' भवति। भाषा इति शब्दः 'भाष्' धातुतः भवति। धातोः अर्थः एव 'व्यक्तायां वाचि' इति, प्रकटरूपेण उच्चध्वनिना वा कथनम् इत्यर्थः। भाषाविज्ञानमतानुसारं विचाराणम् आदानप्रदानस्य माध्यमं

भाषा। सा च भाषा संवादशीला। अतः भाषणेन विना संस्कृतस्य भाषात्वमेव कथं सिद्ध्यते? यया भाषया सम्भाषणं प्रचलति सा एव भाषा जीवति। सम्भाषणं परित्यक्तं चेत् भाषायाः दिवङ्गतिः भवति। विश्वे स्थितानां भाषाणामितिहासं पश्यामः चेत् एषः अंशः स्फुरीभवति। संस्कृतस्यापि जीवनकालः यदि वर्धनीयः, तर्हि तया भाषाया सम्भाषणम् अपरिहार्यम्। अतः भाषायाः सर्वमूलं भाषणम्, वृक्षस्य फलपुष्पादयः आवश्यकाः एव चेत् वृक्षस्य चिरजीवनम् अपेक्षते चेत् तस्य मूलस्य पोषणमपि अवश्यं चिन्तनीयम्। अनया पृष्ठभूमिकया पश्यामः चेत् एतत् द्रढीभवति यत् संस्कृतशिक्षणक्षेत्रे संस्कृतं 'भाषात्वेन' एव द्रष्टव्यं, न तु विषयाकरमात्रत्वेन।

भाषायाः परिपूर्णज्ञानलाभाय चत्वारि कौशलानि- श्रवणं, भाषणं, पठनं, लेखनं चेति। तत्र श्रवणं पठनं च अवगमनात्मकं भवति, भाषणं लेखनं च अभिव्यक्त्यात्मकं भवति। चतुर्णाम् अपि कौशलानां यदा प्राधान्यं भवति तदा एव शिक्षणं परिपूर्णं भवति। इदानीं यत् शिक्षणं प्रचलति तत्र कस्यापि प्राधान्यं न भवति। पठनलेखनयोः अल्पं प्राधान्यं यद्यपि दृश्यते, तच्च प्राधान्यं 'कृत्रिमता'-सम्बलितं भवति। भाषाशिक्षणक्षेत्रे चत्वारः अंशाः प्राधान्यमावहन्ति। ते च- १.पाठ्यक्रमः, २.पाठयिता शिक्षकः, ३.पाठनपद्धतिः, ४.परीक्षाक्रमश्चेति। एते चत्वारः अंशाः परस्परावलम्बिनः। एतेषु कस्मिंश्चिद् एकस्मिन् अंशे परिवर्तनं क्रियते चेत् नालम्। यतः अपरिवर्त्तिताः अन्ये अंशाः प्रगतेः बाधकाः भवन्ति। अतः शिक्षणक्षेत्रे समग्रविकासः यदि इष्यते तर्हि पूर्वोक्तेषु चतुर्षु अपि अंशेषु परिवर्त्तनम् अवश्यं भवेत्। प्रायः सर्वेषु राज्येषु, सर्वविधेषु अपि विद्यालयेषु सर्वेषु अपि स्तरेषु 'संस्कृतम्' अनुवादपद्धत्या प्राधान्येन पाठ्यते। किमर्थम् एषा एव पद्धतिः प्राधान्येन उपयुज्यते इत्येतस्य प्रश्नस्य उत्तररूपेण कारणत्रयं वक्तुं शक्यते।

१. संस्कृते यः ज्ञानराशिः अस्ति सः नित्यान्तम् आवश्यकः अस्ति। सः च ज्ञानराशिः प्राप्तव्यः चेत् संस्कृताध्ययनम् आवश्यकम् एव। ज्ञाराशिप्राप्त्यर्थं संस्कृतम् आवश्यकम् इति दृष्टिः चिन्तिता इत्यस्मात् कारणात् संस्कृतध्ययने का पद्धतिः भवेद् इत्येतत् चिन्तनम् एव न भवति। अथवा गौणतां प्राप्नोति। एवं 'संस्कृतं ज्ञानराशेः आकरः' इत्येषा दृष्टिः पद्धतिविषये अनादरं जनयति।

२. व्याकरणानुवादपद्धतिः आङ्ग्लजनैः प्राध्यान्येन प्रयुक्ता। इदानीं भारते शिक्षणादिक्षेत्रेषु आङ्ग्लजनैः आरब्धः एव क्रमः गतानुगतिकतया अनुस्रियते प्रायः। अतः अविचिन्तितरूपेण सा एव पद्धतिः सर्वत्र अनुवर्त्तमाना दृश्यते।

३. व्याकरणानुवादपद्धतिः अल्पपरिश्रमसाध्या। अतः एव एषा पद्धतिः शिक्षकाणां प्रिया जाता। संस्कृताध्यापने अन्याः श्रेष्ठाः अपि पद्धतयः सन्ति, तासां ज्ञानं सम्पादनीयम् इति बहवः शिक्षकाः न जानन्ति। अतः अज्ञानता अपि अत्र अपरं कारणम्।

व्याकरणानुवादपद्धतौ न अस्माकम् अनादरः उपेक्षा वा किन्तु अपेक्षितफलप्राप्तिदृष्ट्या सा अकिञ्चित्करी इत्यतः तस्याम् अप्राशस्त्यदृष्टिः अस्माकम्। अत्र उदाहरणमेकं परिशीलयामस्तावत्।

कश्चन तरुणः। तम् 'नामिकः' इति वयं निर्दिशामः। सः अस्मासु एव अन्यतमः भवितुमपि अर्हति। सः संस्कृतं प्रधानविषयत्येन स्वीकृत्य स्नातकोत्तरपदवीपरीक्षायाम् उत्तीर्णः। तस्य प्रधानविषयः संस्कृतम् इत्यतः जनाः चिन्तयन्ति यद् एषः संस्कृतस्य 'आचार्यः' पण्डितः इति वा। अनामिकः कदाचित् सभायां निवेदितः - संस्कृतज्ञः भवान् संस्कृतेन कानिचन वाक्यनि वदतु इति। एतत् श्रुत्वा अनामिकः नितरां भीतः सः कष्टेन कानिचन वाक्यानि वदेत् मौनं तिष्ठेत् वा। किमर्थं तस्य तादृशी स्थितिः? किं तस्य असामर्थ्यम्? असामर्थ्यं तु सर्वथा न। पाठनपद्धतिः एव मूलं कारणम्। यद्यपि तेन वर्षाणि संस्कृतम् अधीतं,

किन्तु सम्भाषणकौशलं न अधिगतम्। पाठनपद्धतौ सम्भाषणकौशलस्य प्रधान्यं नास्ति इत्यतः अनामिकः तत्सदृशाः बहवः च कष्टम् अनुभवन्ति। अनामिकसदृशाः एव भाविनिकाले अध्यापकाः भवन्ति। तदा तस्य शिष्याः अपि कष्टम् अनुभवन्ति। एवम् आवर्तते विषचक्रम्। तस्मात् शिक्षणे सम्भाषणस्य एव सर्वाधिकप्राध्यान्यं भवेत्। भाषापाठनसन्दर्भे भाषायाः नियमानाम् अवगनाय अपि भाषाप्रयोगस्य पूर्वानुभवः आवश्यकः। नो चेत् छात्राः उदाहरणानि सम्यगवगन्तुं न शक्नुवन्ति। सिद्धान्तस्य उदाहरणे अन्वयं कर्त्तुं न शक्नुवन्ति। अतः प्रथमं सम्भाषणद्वारा भाषापरिचयं कारयित्वा अनन्तरं नियमाः शिक्षणीयाः। तदा नियमावगमनं स्पष्टं शीघ्रञ्च भवति।

भाषायाः नियमज्ञानं प्रयोगकौशलम् इत्यनयोः मध्ये भेदः अस्ति। कस्यचित् जनस्य संस्कृतभाषायाः नियमज्ञानमस्तीति कारणतः तस्य संस्कृतभाषायाः प्रयोगकौशलं भवत्येव इति वक्तुं न शक्यते। परन्तु यस्य प्रयोगसामर्थ्यं भवति तस्य नियमज्ञानं परोक्षतया भवत्येव। अतः भाषाभ्यासस्य केन्द्रविन्दुः प्रयोगः भवेत्। अतः 'भाषां न केवलम् अवगन्तुं पाठयन्तु, अपितु तस्याः प्रयोगकरणमपि ज्ञापयन्तु' इति यद्यपि भाषाशिक्षणविदः वदन्ति तथापि केवलं सम्भाषाणेद्देशेन सम्भाषणपाठं न, भाषाशिक्षणस्य सरलविधिरूपेण सम्भाषणमाध्यमेन पाठनं करणीयम्। सम्भाषणद्वारा भाषाभ्यासेन विना भाषा स्वाधीना न भवति, करगता न भवति, सहजता नायाति च। वर्तमानसमये संस्कृतशिक्षणस्य आरम्भः लेखनतः भवति। किञ्च पठने एव परिसमाप्तः भवति। भाषणस्य श्रवणस्य च स्थानमेव नास्ति। पूर्वमुक्तानि चत्वारि सोपानानि आरुह्य (श्रवणं, भाषणं, पठनं, लेखनञ्चेति) क्रमानुसारं गन्तव्यम्। अस्माकं मातृभाषाभ्यासः पूर्वोक्तम् एकैकं सोपानक्रमेण भवति। जन्मतः शिशुः मातृभाषाशब्दान् शृणोति, पुनः पुनः श्रवणेन सः ध्वनिः शिशोः मनसि मुद्रितः भवति। पुनः तेन ध्वनिना सह तद्ध्वनिसम्बद्धचित्रं मुद्रितं भवति।

शिशुः श्रुतस्य दृष्टस्य च सम्बन्धं कल्पयति। तेन शिशुना शब्दार्थः गृह्यते। तदनन्तरं सः ध्वनेः अनुकरणस्य आरम्भं करोति, अर्थात् भाषितुं प्रयत्नं करोति। तत्पश्चात् ध्वनेः लिपेः च सम्बन्धं ज्ञात्वा लिपिं जानाति, लिपिमाध्यमेन शब्दं ज्ञात्वा शब्दम् उच्चारयति, अर्थात् पठति, तत्पश्चात् मुखेन वदन् लेखनाभ्यासं करोति। एषा अस्ति सरला मातृभाषाऽभ्यास-पद्धतिः। अर्थात् मातृभाषाभ्यासः सोपानक्रमेण नाम आरोहणक्रमेण भवति। प्रकृतं तु तस्मिन् स्थले संस्कृताभ्यासः विपरीतक्रमेण भवति। प्रथमस्य ऊर्ध्वगतिः, द्वितीयस्य अधोगतिः। संस्कृतशिक्षणे वर्तमानायाः अधोगतेः कारणम् एतदेव।

संस्कृतशिक्षणक्षेत्रे अपरा बाधा अस्ति संस्कृतभाषा कठिनेति। संस्कृतं कठिनम् इति भावनायाः मूलं कियद्गभीरतां गतमिति संस्कृतच्छात्राणाम् आन्तरङ्गिकं वार्त्तालापं, समाजे सामान्यजनानां शिक्षितजनानाञ्च कथोपकथनं श्रवणमात्रेणैव ऊहितुं शक्नुमः। संस्कृतं नाम बहु कठिनम् इति भावना जनानां मनसि बद्धमूला अस्ति। एतस्य परिणामः कः जातः? संस्कृतपाठनं नाम 'नरः नरौ नराः' इति रूपरटनम् इति भावः जनमानसे दृढः भवति। वस्तुतः सर्वाः अपि भाषाः समानतया सरलाः प्रौढाः च भवन्ति। सामान्यतः प्रत्येकं भाषायाः वाङ्मयभाषा प्रौढा भवति, व्यवहारभाषा सरला भवति। तर्हि कठिनमिति भावः कथमुत्पद्यते? पाठनविधेः पाठ्यपुस्तकानां च कारणात्। कश्चित् ग्रन्थं 'क' आचार्यः पाठयति चेत् छात्रैः सारल्यम् अनुभूयते। तमेव ग्रन्थं 'ग' आचार्यः पाठयति चेत् काठिन्यम् अनुभूयते। पाठ्यविषयः समानः चेदपि तस्य तस्य आचार्यस्य पाठनविधिना कठिना सरला वेति भावनिर्माणं भवति। अतः सरलम् इति सापेक्षः शब्दः। एकमेव किञ्चित् वाक्यं व्यक्त्यनुसारं कठिनतमं, कठिनतरं, कठिनं, सरलं, सरलतरं, सरलतमं च भवितुम् अर्हति। अतः अस्माकम् उद्देश्यं भवेत् यत् अनधीतसंस्कृतः सामान्यजनाः अपि अस्माभिः भाष्यमाणं संस्कृतं श्रुत्वा

अर्थं ज्ञातुं शक्नुयुः। अतः अस्माभिः भाषणे तादृशं सरलं संस्कृतं प्रयोक्तव्यम्। सारल्यस्य निर्णायकाः श्रोतारः पठितारः वा जनाः एव। भाषायाः सरलतायाः निर्णये सामान्यजनानां सुखावगम्यता एव आधारः इति मनसि विचिन्त्य पाठ्यक्रमः रचनीयः।

कस्यचन पाठ्यक्रमस्य निर्माणात् पूर्वं केचन अवधातव्याः अंशाः भवन्ति, ते सन्ति यथा-

१. किं पाठनीयम्, कथं पाठनीयम् इति। सर्वदा किं पाठनीयम्, इति विषये एव चर्चा भवति। रघुवंशस्य द्वितीयः सर्गः उत द्वादशः, तत् नाटकम् अथवा एतत् नाटकम्, कस्य ग्रन्थस्य कः भागः इति विषये केवलं चर्चा भवति। वस्तुतः, कथं पाठनीयम् इत्यपि समानतया मुख्यः विषयः। एकया दृष्ट्या महत्तरः विषयः अपि।

२. समाजे क्रमवर्धिष्णूनाम् अन्यायभ्रष्टाचाराणं विनाशाय पाठ्यक्रमे नैतिकशिक्षा कल्पनीय।

३. मातृभूमिं, मातृभाषां (संस्कृतम्) समाजसेवां च प्रति प्रतिविमुखाः छात्राः युवकाः युवत्यश्च यथा एताः प्रति श्रद्धाशीलाः, आग्रहान्विताश्च भविष्यन्ति तादृशी शिक्षापद्धतिरवलम्बनीया।

४. लोकप्रचलितशब्दप्रयोगः भवेत्। यथा- सर्वासु भारतीयभाषासु अधिकप्रमाणेन संस्कृतशब्दाः सन्ति। अस्माभिः आञ्चलिकभाषायां प्रचुरतया प्रयुज्यमानान् संस्कृतशब्दान् स्वीकृत्यैव प्रयोगः करणीयः। संस्कृतशब्दानाम् अभावे संस्कृतसमीपस्थाः शब्दाः स्वीकरणीयाः। आञ्चलिकभाषायां ये संस्कृतजन्य(तद्भव)शब्दाः सन्ति, तेषां मूलसंस्कृतशब्दानां प्रयोगेण अपि अर्थावगमने सारल्यं भवति।

५. यः शिक्षकः संस्कृतस्य यं विषयं सन्दर्भं वा पाठयति तद्विषयकं ज्ञानं तस्य पूर्वं स्यात्। अन्यथा छात्राणां जिज्ञासापूरणेऽसमर्थः सन् न केवलं सः निन्दितः भवेद् अपि तु संस्कृतं कठिनं तन्न पठनीयम्

इति भावना विद्यार्थिषु बलवती स्यात्। किमर्थं संस्कृतम्? किं संस्कृतम्? अद्यतने काले का वा अस्य आवश्यकता? इत्यादीनां प्रश्नानां समाधानार्थं

शिक्षकः पारङ्गतो भवेत्। यस्य कस्यापि शास्त्रस्य पाठनात् प्राक् तस्य सामाजिकसन्दर्भे का आवश्यकता इत्यस्यालोचना प्रथमम् उचिता। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति कथनानुसारं कोऽपि छात्रः तद्विषयं सश्रद्धं नैव पठेत्।

६. पाठ्यक्रमस्य सरलता रोचकता च।

७. पाठ्यक्रमे ते ते सर्वे विषयाः अपि संयोजनीयाः येषाम् आधुनिककाले समाजाय आवश्यकता अस्ति। सङ्गणकम्, टङ्कणम्, ...।

८. पाठ्यक्रमः सदा छात्रकेन्द्रितः स्यात् न गुरुकेन्द्रितः इति।

९. संस्कृताध्यापकैः प्राथमिकभाषाध्यापनकाले पाठ्योपकरणानि दर्शपत्राणि च प्रयोक्तव्यानि।

१०. अध्यापकानां पाठदानं केवलं वृत्त्यै न व्रतायैव भवेत्। 'शिक्षा' च पद्धतिः इति पदद्वयं विविधं व्याख्यातम्। समासेन 'शिक्षा' इति शब्दः शिक्ष् विद्योपादाने इति धातोः निष्पन्नः। शिक्ष्यते विद्योपादीयते अनया इति शिक्षा, येन प्रकारेण मनुष्यः शिक्षां गृह्णाति सः प्रकारः पद्धतिः इत्युच्यते। कीदृशं ज्ञानं, केन प्रयोजनेन, कस्मै, केन प्रकारेण दीयताम् इत्येतानि तत्त्वानि कस्या अपि पद्धतेः गुणवत्तां निर्द्धारयन्ति, उत्कृष्टशिक्षा पद्धतिम् अपेक्षते।

आविष्कृतेषु विधिषु प्रत्यक्षविधिः, कथाकथनविधिः, अनुवादविधिः च अस्माभिः स्वीकर्त्तव्याः। भाषाशिक्षणस्य सामान्यतः स्तरत्रयम् अस्ति। प्रथमं प्राथमिकस्तरे प्रत्यक्षविधिः। द्वितीयं माध्यमिकस्तरे कथाकथनविधिः। तृतीयं प्रगतस्तरे अनुवादविधिः। प्रत्यक्षविधिः नाम परस्परयोः आलापमाध्यमः येन विषयस्य बोधः सहजतया जायते। इमं विधिं 'मातृशिक्षणपद्धतिः' इत्यपि कथयन्ति। यथा माता अनायासेन अनेकवारम् आलापं कृत्वा विषयं शिशोः कृते

बोधयति, शिशुश्च अनेकान् विषयान् धारयति, तद्वत् प्रत्यक्षविधिद्वारा स्वल्पसमयेन सरलया शैल्या केवलम् उपयोगिविषयाणां पाठनं कारयितुं शक्यते। न तु सर्वेषाम्। अयं विधिः प्राथमिकस्तरे उपकारको भवति। आङ्ग्लभाषायाम् श्टाटर् इति कश्चन शब्दः अस्ति। भोजनात् पूर्वं 'सूप्' इत्यादिकं यद् दीयते तदेव। तस्य पानेन भोजनेच्छा वर्धते। प्रत्यक्षविधिना पाठनं नाम संस्कृताध्ययनस्य उत्साहनिर्माणं करोति, मार्गं प्रशस्तं करोति, बाधाः निवारयति। मानसिकान् अवरोधान् दूरीकरोति। अतः प्रत्यक्षविधिना पाठनं नाम संस्कृतवाङ्मयस्य, शास्त्राणां प्रौढसंस्कृतस्य च द्वारोद्घाटनमेव।

संस्कृतशिक्षणे कथाकथनविधेः उपयोगः अतीतकालेऽपि भवति स्म। पञ्चतन्त्रम्, हितोपदेशः नाम पुस्तकद्वयम् एतस्य उदाहरणम् अस्ति। कथाभिः तथ्यात्मकोपस्थापनं पाठनं वा कथाकथनविधिः। अनेन विधिना विषयज्ञानं, स्वस्थमनोरञ्जनं, स्मरणशक्तेः विकासः, कल्पनाशक्तिः च वर्द्धिताः भवन्ति। अनुवादविधिना पाठनेन विषयाधिगमः सुस्पष्टो भवति। भाषाशिक्षणे संस्कृतभाषाज्ञानेन सह अन्यासां भाषाणां शिक्षणे अनुवादकरणे विषयावगमे च कौशलं सम्पादयितुं शक्यते। किञ्च अनेन विधिना पाठनेन छात्राणां मानसिकविकासो जायते। एवञ्च व्याकरणादिसूक्ष्मविषयाणां सम्यक् परिचयोऽपि भवति।

प्रशिक्षणपाठ्यक्रमे क्रमशः एकैकं विधिम् अनुसृत्य अनन्तरं परम्परागतविधिना पाठनं भवेत्। अन्येऽपि बहवः विधयः सन्ति, तान् स्वीकृत्य अपि पाठयितुं शक्यते। ते यथा- के. जि. विधिः, प्रश्नोत्तरात्मकविधिः, दृश्यश्रव्यसाधनविधिः, आगमनविधिः, निगमनविधिः, पाठ्यपुस्तकविधिः, व्याख्यानविधिः, आदयः। शिक्षणसूत्राणि अपि बहूनि सन्ति, तानि उपयुज्य पाठनेन छात्राः निश्चयेन लाभान्विताः भवेयुः। यथा-

१. ज्ञातात् अज्ञातं प्रति, २. सरलात् जटिलं प्रति

३. स्थूलात् सूक्ष्मं प्रति, ४. पूर्णात् अंशं प्रति

५. अनिश्चितात् निश्चितं प्रति, ६. विशिष्टात् सामान्यं प्रति

७. अनुभवात् तर्कं प्रति

८. विश्लेषणात् संश्लेषणं प्रति इत्यादीनि।

अन्यानि कतिचन सूत्राणि एवं सन्ति -

१.संस्कृतभाषायां रचितानां ग्रन्थानां परिचयः देयः।

२.संस्कृतपत्रिकाणां पाठः भवेत्। (चितानां पत्रिकाणाम्)

३.संस्कृतगीतगानम् अवश्यं भवेत्। तेन कश्चन भाषाश्रवणसंस्कारः भवति।

४.संस्कृतक्रीडाः भवेयुः, यथा- सङ्ख्यापाठनम्, नामस्मरणक्रीडा, शब्दस्मरणक्रीडा, अन्त्याक्षरीक्रीडा इत्यादयः।

५.प्रतिस्पर्द्धा, नाटकाभिनयः, श्रव्यदृश्यध्वनिचित्रमुद्रिकाणां श्रवणं प्रदर्शनं च भवेयुः।

६. मध्ये मध्ये संस्कृतज्ञानां संस्कृतानुरागिणाञ्च सङ्गोष्ठी भवेत्।

७.पाठ्यपुस्तकानां चयनसन्दर्भे जागरूकता आश्रयणीया।

८.भारते विद्यमानानां नानाविधानां संस्कृतशिक्षणसंस्थानां पाठनपद्धतेः, कार्यपद्धतेः पुस्तकानाञ्च अनुशीलनं कर्त्तव्यम्।

अनया पद्धत्या एव संस्कृतशिक्षणे छात्रस्य सर्वतोमुखी विकासः भविष्यति, शिक्षायाः तदेव प्रयोजनम् उद्देश्यञ्च। ईदृशी पद्धतिः एव एकस्य छात्रस्य आध्यात्मिकीं, धार्मिकीं, नैतिकीं, बौद्धिकीं, मानसिकीं, सांस्कृतिकीं, सामाजिकीं च उन्नतिं साधयितुं समर्था भवति। इत्थं संस्कारप्रसूता शिक्षापद्धतिः समेषां छात्राणां कृते उपयोगिनी भवेत्।



# भारतस्य परिचायकं संस्कृतम्

## 1. उपक्रमः (भारतस्य राष्ट्रिया अस्मिता)

राष्ट्रम् इत्युक्ते किम्? राष्ट्रं नाम राजते इति राष्ट्रम्, राज् धातोः ष्ट्रन्-प्रत्यये कृते सति राष्ट्रशब्दो निष्पद्यते। भौगोलिक-सीमारेखाभिः समङ्कितो वा कश्चिदेकशासकाधिकृतो भूभागो वा राष्ट्रं न भवति। कयाश्चिद् विशिष्टसंस्कृत्या परिलक्षितभूभाग एव राष्ट्रं भवति। तस्याः विशिष्टायाः संस्कृतेः रक्षणार्थं या संस्था जायते सा राष्ट्रमिति कथ्यते। तन्नाम नार-जनाद्-राज्यानां स्वतन्त्रात्मकसमूह एव राष्ट्रम्। यत्र सभ्यता-संस्कृति-जाति-धर्म-सम्प्रदायावलम्बिनां जनानां सर्वतोभावेन नायकेनैकेन संरक्षितात्मभ्युदयशीलाप्रणाली स्यात्। सांस्कृतिकपक्ष एव कस्यश्चिद्राष्ट्रस्य परिचायको भवति। यावत्कालं राष्ट्रियजना आत्मनोऽधिकतरं राष्ट्रमिति मन्यन्ते, वैयक्तिकहानिमपि सहमाना राष्ट्रहितं वर्धयन्ते, तावत्कालं तद्राष्टं जीवति, तत्रत्या संस्कृतिश्च जीवति, अन्यथा म्रियते। सभ्यतानां संस्कृतीनां वा उत्कर्षापकर्षादयः भाषामाध्यमेनैव समङ्किता भवन्ति। प्राथमिकस्तरात् प्रौढस्थितिं यावत् एकैकस्याः भाषायाः विकासोपक्रमं यदि अवलोकयेम तर्हि ज्ञायते यत् तत् तस्य जनसमुदायस्य इतिहासस्य पदचिह्नमेव दर्शयति इति। भाषा इत्येतत् न केषाञ्चन शब्दानां सङ्ग्रहः। सा अस्ति राष्ट्रियतायाः सङ्कथनमेव। एकैकस्यां भाषायामेव तस्य राष्ट्रस्य समाजस्य वा इतिहासो निविष्टो वर्तते। भाषा यावती सुदृढा भवति तावती सुदृढा तिष्ठति राष्ट्रिया अस्मिता संस्कृतिश्चापि। या कापि भाषा यदि विनष्टा भवेत् तर्हि तस्य समुदायस्य राष्ट्रस्य वा विशिष्टा संस्कृतिरपि विनश्येत्।

## 2. संस्कृतभाषायाः योगदानम्

### 2.1.भाषायाः महत्त्वम्

भाषायाः महत्ता अस्माभिः इतोऽपि अवगन्तव्या विद्यते। कस्यचिद् राष्ट्रस्य जीवनप्रतीकं नाम भाषा एव- इति उक्तवान् आसीत् राजर्षिः पुरुषोत्तमदासटण्डनः। कस्यचन समुदायस्य राष्ट्रस्य वा उत्कर्षार्थम् अवलम्ब्यमानाः अंशाः के इत्येतस्मिन् विषये डॉ.राममनोहरलोहिया-वर्यैण कृतमिदं विश्लेषणं मननयोग्यमस्ति। जातिः, भाषा, धर्मः, स्थानीयता - इमाः चतस्रः भारतीयजीवनस्य महाचालकशक्तयः इति।

### 2.2. चिरन्तनचिन्तनस्य आश्रयः

भारतस्य चिरन्तनचिन्तनस्य आश्रयो वर्तते संस्कृतभाषा। भारतीयसंस्कृतेः प्रतिबिम्बमेव संस्कृतभाषा। भारतीयसंस्कृतिः संस्कृतभाषा च अन्योऽन्यं विना प्राणहीने जायत एव। बहिर्विश्वे भारतं संस्कृतञ्च समार्थकं वर्तते। पाश्चात्यैः भारतं -संस्कृतभारतम्- इत्येवं ज्ञायेत। विश्वे भारतीया संस्कृतिः संस्कृतभाषा च भारतस्य द्वे परिचायके स्तः। अतः सुष्ठूक्तम् - भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा - इति। भारतस्य आत्मस्वरूपिणीयं संस्कृतभाषा। भारतस्य सांस्कृतिकदृष्ट्या संस्कृतस्य महत्त्वमपरिमेयं वर्तते। तदर्थं - संस्कृतिः संस्कृताश्रिता - इत्युक्तम्। संस्कृतवाङ्मयमेव भारतस्य राष्ट्रियसांस्कृतिकैकस्य मूलम्। भारतस्य सांस्कृतिकभाषा संस्कृतभाषा एव। संस्कृतमेव भारतस्य आत्मा।

## 3. स्वतन्त्रभारते संस्कृतस्य स्थानम्

### 3.1. राष्ट्रस्य नाम

सर्वादौ परिशीलयामस्तावत् यत् - अस्माकं राष्ट्रस्य नाम किम्? उत्तरं - भारतम् - इति। एतन्नाम तु संस्कृतं नाम खलु। उच्यते - भरत्येष

प्रजाः सर्वास्ततो भरत उच्यते। भरत एव भारतम्। भरतानां समूहो भारतम्। भा-प्रभायां - (दीप्तौ) रतम् अस्मद्राष्ट्रं भारतम्। संस्कृतेन देशाय नाम दत्तम्। तदनन्तरम् अस्य भारतराष्ट्रस्य ध्येयवाक्यं किमिति जिज्ञासायामुत्तरं यत् - सत्यमेव जयते। संस्कृतभाषानिबद्धं वाक्यमिदं तैत्तिरीयोपनिषदो गृहीतमस्ति।

## 3.2. राष्ट्रियगानम्

अस्य भारतदेशस्य राष्ट्रियगानं -जन-गण-मन-इत्यस्य भाषा 90प्रतिशतं संस्कृता 10प्रतिशतं संस्कृतमूलिका चास्ति। कवीन्द्रेण रवीन्द्रेण रचितस्यास्य राष्ट्रियगानस्यावबोधः सहजतया समस्तभारतवासिनां भवत्येव। उपन्याससम्राजा वङ्किमचन्द्र-चट्टोपाध्यायेन विरचितस्य राष्ट्रियगीतस्य पदद्वयं - वन्दे मातरम् - देशस्य कृते वस्तुतः मूलमन्त्रः एव, अथवा एवमपि वक्तुं शक्यते यत् 'राष्ट्रगायत्री' एवास्ति। तेन गीतस्यास्य रचना सहजतया संस्कृतेनैव कृता, परन्तु केचन वङ्गीयवाक्यबन्धाः अपि गीतेन सह सन्ति। भारतीयजीवने संस्कृतस्य स्थानं तथा स्पष्टमासीत् यत् - विषयेऽस्मिन् केनापि विशेषावधानं न दत्तम्। अनन्तरं स्वतन्त्रभारतस्येदं राष्ट्रगीतमेवाभवत्।

## 3.3. ध्येयवाक्यानि

भारतस्य शासनव्यवस्थायाः प्रमुखस्तम्भाः सन्ति - संसद् (लोकसभा, राजसभा) सर्वोच्चन्यायालयः, समूहमाध्यमञ्चेति। भारतस्य लोकसभायाः आदर्शवाक्यमस्ति- धर्मचक्रप्रवर्तनाय इति संस्कृतवाक्यम्। भारतीयसंसदः ध्येयवाक्यमस्ति- अयं निजः परो वेति गणना लघुचेतसाम् - इति। सर्वोच्चन्यायालयस्य आदर्शवाक्यमस्ति -यतो धर्मस्ततो जयः। इदमपि संस्कृतवाक्यं महाभारतात् गृहीतमस्ति। समूहमाध्यमस्य प्रधानमङ्गद्वयं वर्तते- आकाशवाणी, दूरदर्शनञ्चेति। तत्र आकाशवाण्याः आदर्शवाक्यमस्ति -बहुजनहिताय बहुजनसुखाय च इति। दूरदर्शनस्य आदर्शवाक्यमस्ति -सत्यं शिवं सुन्दरम्- इति।

लोकसभाप्रसारणस्य पृथक् आदर्शवाक्यमस्ति -असतो मा सद्गमय- इति। संस्कृतवाक्यमिदं बृहदारण्यकोपनिषदो गृहीतमस्ति। भारतस्य शासनव्यवस्थायाम् आधारशीला इव याः संस्थाः सन्ति, तासामपि संस्थानां ध्येयवाक्यानि संस्कृतभाषाबद्धानि संस्कृतवाङ्मयात् गृहीतान्येव सन्ति। भारतस्य प्रतिरक्षाविभागं प्रति यदि दृष्टिं प्रसारयेम तर्हि तत्रापि त्रयो विभागाः सन्तीति पश्यामः। स्थलसेना, जलसेना, वायुसेना चेति। स्थलसेनायाः ध्येयवाक्यं वर्तते- यशो लभस्व - इति गीतातः गृहीतमस्ति। जलवाहिन्याः आदर्शवाक्यमस्ति -शं नो वरुणः - इति वाक्यमिदं वेदात् स्वीकृतम्। वायुसेनायाः आदर्शवाक्यमस्ति -नभः स्पृशं दीप्तम्- इति वाक्यमपि श्रीमद्भगवद्गीतातः गृहीतं वर्तते। इदानीं भारतराष्ट्रस्य अन्ये ये विभागाः सन्ति तेषामपि आदर्शवाक्यानि संस्कृतवाङ्मयाद् गृहीतानीति दृश्यन्ते। तद्यथा- तथ्य-सम्प्रचारविभागस्य आदर्शवाक्यमस्ति-अहर्निशं सेवामहे - इति संस्कृतवाक्यम्। भारत-सञ्चार-निगम-संस्थायाः जङ्गमदूरवाणीपरिसेवा या वर्तते तस्याः आदर्शवाक्यमस्ति- सन्देशं मे हर- इति यच्च महाकविकालिदास-विरचितमेघदूतकाव्यात् स्वीकृतम्। भारतीय-प्रत्नतत्त्व-विभागस्य ध्येयवाक्यमस्ति प्रत्नकीर्तिमपावृणु - इति। भारतस्य पर्यटनविभागस्य आदर्शवाक्यमस्ति -अतिथिदेवो भव - इत्येतदपि उपनिषदो गृहीतं वर्तते। भारतस्य विदेशमन्त्रालयस्य आदर्शवाक्यमस्ति -वसुधैव कुटुम्बकम्- इति नीतिशास्त्रात् स्वीकृतमस्ति। भारतस्य विदेशनीतेः मूलसिद्धान्त-सूचकशब्दः -पञ्चशीलम्- अपि संस्कृतपदं वर्तते। भारतस्य राष्ट्रियपुस्तकन्यासस्य आदर्शवाक्यमस्ति -एकः सूते सकलम् - इति। भारतस्य ग्रामोद्योगखादिविभागस्य आदर्शवाक्यमस्ति -कामये दुःखतप्तानां प्राणिनाम् आर्तिनाशनम् - इत्येतद् वाक्यं रन्तिदेवेन राज्ञा लोककल्याणस्य चरमनिदर्शनं प्रदर्शयता उक्तमासीत्। भारतीयजीवन-बीमासंस्थायाः आदर्शवाक्यमस्ति -योगक्षेमं वहाम्यहम्- इति गीतायाः

स्वीकृतं वर्तते। भारतस्य आयकरविभागस्य आदर्शवाक्यमस्ति - कोषमूलो दण्डः- इति। भारतस्य गुणवत्तानिर्णायकसंस्थायाः भारतीय-मानकसंस्थायाः आदर्शवाक्यमस्ति-मानकः पथप्रदर्शकः-इति। भारतीय-राजमार्गः इत्यस्याः आदर्शवाक्यमस्ति- सन्मार्गात् लोकसेवा- इति। भारतशासनस्यामात्यानाम् (अधिकारिणां) भारतीयप्राशासनिकसेवायाः आदर्शवाक्यमस्ति - योगः कर्मसु कौशलम्- इत्येतदपि गीतातः गृहीतमस्ति। भारतीयारक्षकसेवायाः आदर्शवाक्यमस्ति - सद्रक्षणाय खलनिग्रहणाय च- इति। भारतस्य वाणिज्यविभागस्य ध्येयवाक्यमस्ति-वाणिज्ये वसति लक्ष्मीः। श्रमविभागे - श्रम एव जयति - इति। भारतीयविमानपत्तनस्य आदर्शवाक्यमस्ति-सुरक्षा सहितसेवा- इति। मानव-संसाधन-विकासमन्त्रालयाधीनानि यानि प्रतिष्ठानानि वर्तन्ते, तेषामधिकांशानां ध्येयवाक्यानि अपि संस्कृतवाङ्मयाद् गृहीतानि सन्ति। आदौ तावद् विश्वविद्यालयानुदानायोगस्य आदर्शवाक्यमस्ति - ज्ञान-विज्ञाने विमुक्तये- इति। राष्ट्रियशैक्षिकानुसन्धानं तथा प्रशिक्षणपरिषदः आदर्शवाक्यमस्ति-विद्ययाऽमृतमश्नुते। केन्द्रीयमाध्यमिकशिक्षापरिषदः आदर्शवाक्यमस्ति- असतो मा सद्गमय- इति। केन्द्रीयविद्यालयसङ्घटनस्य आदर्शवाक्यमस्ति -तत् त्वं पूषन् अपावृणु- इति। एवमेव सन्त्यसङ्ख्यानि प्रतिष्ठानानि येषामादर्शवाक्यानि संस्कृतभाषाबद्धानि सन्ति। संस्कृतप्रतिष्ठानानामुल्लेखो विस्तरभयादत्र न क्रियते। राष्ट्रियवित्तकोषाणामपि ध्येयवाक्यानि संस्कृतमयानि दृश्यन्ते। बैङ्क अफ महाराष्ट्र इत्यस्य मुद्रेयं लोकमङ्गला, कर्पोरेशन् बैङ्क इत्यस्य सर्वे जनाः सुखिनो भवन्तु, बैङ्क अफ बरोदा इत्यस्य अक्षय्यं ते भविष्यति, सिण्डिकेट् बैङ्क इत्यस्य विश्वसनीयः मैत्रीपूर्णः- इत्यादीनि सन्ति।

### 3.4.प्रतिष्ठान-नामानि

भारतस्य राष्ट्रियप्रतिष्ठानानां नामान्यपि संस्कृतभाषाबद्धानि सन्ति। तद्यथा- संसद्, लोकसभा, राज्यसभा, विविधमन्त्रालयाः,

विधानसभा, विधानपरिषत्, पौरसभा, पौरनिगमः, पञ्चायतम् इत्यादीनि। सर्वेषां विभागानां संस्थानाञ्च नामानि संस्कृतेन एव कृतानि दृश्यन्ते।

### 3.5.संस्थाप्रमुखानां नामानि

संस्थाप्रमुखानां नामान्यपि संस्कृतमयानि दृश्यन्ते, तानीत्थं सन्ति- राष्ट्रपतिः, प्रधानमन्त्री, अध्यक्षः, मुख्यमन्त्री, राज्यपालः, पौरपिता, राष्ट्रदूतः, महानागरिकः, प्रबन्धकः, लिपिकः, कोषाधिकारी, न्यायाधीशः, अधिवक्ता इत्यादीनि।

### 3.6.राष्ट्रियप्रशस्तीनां नामानि

भारतस्य राष्ट्रियप्रशस्तीनां नामान्यपि संस्कृतभाषाबद्धानि वर्तन्ते। भारतरत्न-पद्मविभूषण-पद्मभूषण-पद्मश्री-ज्ञानपीठ-अशोकचक्र-परमवीरचक्र-शौर्यचक्र-अर्जुन-द्रोणाचार्य-खेलरत्न-जातीयशिक्षक-श्रीवाणी-अलङ्करण-बादरायण-व्यास-इत्यादीनि।

### 3.7. विज्ञानप्रयुक्तिक्षेत्रे

भारतस्य विज्ञानप्रयुक्तिक्षेत्रे याः उपलब्धयः सन्ति, तत्रापि सर्वत्र संस्कृतनामानि सन्ति। भारतस्य प्रथमोपग्रहः- आर्यभटः, क्षेपणास्त्राणि अग्निः-आकाशः-पृथ्वी-वरुणः, चन्द्रयानम्/चन्द्रायणम् इत्यादीनि।

### 3.8.शैक्षणिकप्रतिष्ठानेषु

शैक्षणिकप्रतिष्ठानेष्वपि संस्कृतनामानि प्राप्यन्ते। तद्यथा-आचार्य-उपाचार्य-सहाचार्य-कुलपति-कुलसचिव-प्राध्यापक-प्रवाचक-व्याख्यातृ-अध्यापक-प्रधानशिक्षक-शिक्षकादयः। शिक्षायाः स्तरविभागे अपि संस्कृतनामानि लभ्यन्ते। प्राथमिक-उच्चप्राथमिक-माध्यमिक-उच्चमाध्यमिक-स्नातक-स्नातकोत्तर-विशिष्टाचार्य-विद्यावारिधि-उपाधि-शास्त्री-कोविद-विशारद-परिचय-प्राज्ञ-रत्न-शिरोमणि-विद्वस्-ज्ञानि-वाचस्पति-महामहोपाध्यायादयः स्तराः उपाधयश्च वर्तन्ते। शिक्षणक्षेत्रे ये विषया अध्याप्यन्ते - तेषामधिकांशविषयाणां नामानि चापि विद्यन्ते

संस्कृतमयानि। ते च विषयाः- कला-विज्ञान-वाणिज्य-सङ्गीत-नाटक-प्रबन्ध-पदार्थ-रसायन-उद्भिद-प्रयुक्ति-समाजशास्त्रादीनि।

## 4. भारतीयसंस्कृतिविनाशसन्दर्भे

प्राज्ञाः वदन्ति यत्- कस्यचित् राष्ट्रस्य नाशः करणीयः चेत् तस्य राष्ट्रस्य संस्कृतिः नाशनीया, संस्कृतिः नाशनीया चेत् सांस्कृतिकभाषा नाशनीया इति। भारतस्य सांस्कृतिकभाषां संस्कृतभाषां नाशयितुम् आङ्ग्लेयैः कार्यत्रयं कृतम्। प्रथमं कार्यं तावत् सर्वासां संस्कृतपाठशालानां पिधानं कृत्वा आङ्ग्लविद्यालयानाम् आरम्भः, द्वितीयं तु संस्कृतभाषा निर्जीवभाषा इति प्रचारः, तृतीयं संस्कृतस्य शिक्षणविधेः परिवर्तनम्।

ब्रिटिशजनाः चिन्तितवन्तः यत् भारते दीर्घकालं शासनं करणीयं चेत् अत्रत्यजनानां स्वाभिमानः, श्रद्धा च नाशनीया, अत्रत्याः तेषां प्रेरणास्त्रोततः अर्थात् संस्कृतितः परम्परातः च छेत्तव्याः इति। एतेन उद्देशद्वयेन एव मेकालेद्वारा आङ्ग्लशिक्षणम् आरब्धम्। प्रसङ्गेऽस्मिन् Secondary Education Comission इत्यतः कथ्यते- The education imparted in these schools becae a passport of entrance into Governent services. This was only due to the proclaation issued by Lord Hardinge in 1844 that for service in poblic offices preference should be given to those who were educated in English Schools, In consequence there of education was imparted with the liited object of preparing pupils to join the service and not for life. ऊनविंशशतकस्य प्रारम्भे एव वेण्टिकस्य शासनकालेऽपि इदमेव वक्तव्यं सर्वकारीय Counique इत्यत्र लिखितम् आसीत्- The great

object of the British Governent ought to be the prootion of European Literature and Science aong the natives of India and all the funds appropriated for the purpose of education would be best employed on English Education alone. 1835 क्रैस्ताब्दस्य मेकाले इत्यस्य minute इत्यत्र तदर्थमेव एवंविधमनुष्यनिर्माणस्य निर्देशो वर्तते - ये च स्युः - a class of persons, Indian in blood and colour, but English in taste, in opinions, in orals and in intellect. स्वाधीनोत्तरभारते शिक्षितजनसाधारणेषु सङ्ख्याधिकानामेव बहिरङ्गजीवने किमेतद् वचनं सत्येन नान्वितम्। अस्याः शिक्षायाः परिणामः कि भवेत् तत् मेकाले पितरं पत्रेण एवं ज्ञापयति- The education policy which we are going to formulate if it will be executed, after a few years Indians will forget their own culture and they will hate their own forefathers. (Letters of Macauley) तत एव भारतीयसंस्कृतिरक्षणार्थं तदाश्रिता संस्कृतभाषा भारते परमावश्यका।

अस्माकं भारतनिवासिनां तथा भारतीयसभ्यतायाः जन्म एव संस्कृतस्य क्रोडे, प्रसङ्गेऽस्मिन् भारतसर्वकारेण नियुक्तस्य संस्कृतायोगस्य प्रतिवेदनमुल्लेखनीयम्, यच्च माननीयसर्वोच्चन्यायालयेन उद्धृतम्- अस्माकं संस्कृतिधारा शुष्का एव स्यात्, यदि अस्माभिः संस्कृताध्ययनं हतोत्साहितं क्रियते। अन्यच्च- संस्कृताध्ययनमस्य राष्ट्रस्य ऐतिह्यरक्षार्थं निस्सन्देहमावश्यकमस्ति। संस्कृतज्ञानेन विना भारतीयदर्शनं बोद्धुं न शक्यते, यस्योपरि अस्माकं सर्वा अपि सांस्कृतिकसम्पदः आधारिताः सन्ति। संस्कृतं भारतीयसभ्यतायाः

संस्कृतेश्च प्रतिमूर्त्तिरूपं वर्तते। भारतीयजनगणः संस्कृतमस्य महतो देशस्य विविधजनसमूहम् एकतासूत्रेण बन्धनस्य शक्तिरूपेण पश्यति।

भारतीयभाषाणां संवर्धनाय विकासाय च संस्कृतस्य विशिष्टा महत्त्वपूर्णा भूमिका वर्तते, किञ्च देशस्य सांस्कृतिकैकतायाम् अस्य अप्रतिमयोगदानदृष्ट्या विद्यालयस्तरे विश्वविद्यालयस्तरे चास्याध्ययनव्यवस्था समधिकव्यापकाधारेण भवेत्।

The report of the Sanskrit Comission (set by Government of India) which was submitted in 1957 Speaks eloquently about the importance of Sanskrit. We do not purpose to burden this judgment with all that was said by the Comission in this regard. It would be enough for our purpose if we take note of some passage finding place in the report which highlight the quality. Substance, content and stregth of Sanskrit.

At page 71 of the report, it has been entioned that Sanskritis one of the greatest languages of the world and it is the classical langauge per excellence not only of India but of a food part of Asia as well. At page 73 the report states that the Indian people and the Indian civilisation were born, so to say, in the lap of Sanskrit and it went" hand in hand with the historical developent of the Indian people, and gave the noblest expression to their mind and culture which has come down to our day as an

inheritance of priceless order for India, many, for the entire world."

Without the learning of Sanskrit is not possible to decipher the Indian philosophy on which our culture and heritage are based.

Considering the special importance of Sanskrit the growth and developent of Indian languages and its unique contribution to the cultural unity of the country.

सांस्कृतिकस्वातन्त्र्यमेव कस्यचिदपि देशस्य कृते प्राधान्यमावहति। पाश्चात्यानां संस्कृतिविषये यदि श्रद्धा दृष्टिरेवं स्यात्, तर्हि अस्माकं दृष्ट्या पुरातनराष्ट्रस्यास्य सांस्कृतिकोत्तराधिकारः सर्वदैव सुमहत् स्थानमधिकरोति।

The above shows the concern for culture evinced even by the westerners. So far as "We, the people of India" are concerned, they have always held in high estee the cultural heritage of this ancient land. And to fortell our views, learning of Sanskrit undoubtedly necessary for protection of this heritage.

## 5. संस्कृतविषये मनीषिणामभिमतम्

अत्र विश्वकवेः रवीन्द्रनाथस्य उक्तिद्वयं विशेषेण अवधानयोग्यं वर्तते। "भारतवर्षेर चिरकालेर ये चित्त ताहार आश्रय संस्कृतभाषाय। एइ भाषार तीर्थ पथ दिये आमरा देशेर चिन्मयप्रकृतिर स्पर्श पाव, ताके अन्तरे ग्रहण करव, शिक्षार एइ लक्ष्य आमार मने दृढ छिल। इंरेजी

भाषार भितर दिये नाना ज्ञातव्य विषय आमरा जानते पारि, सेगुलि अत्यन्त प्रयोजनीय। किन्तु, संस्कृत भाषाय एकटि आनन्द आछे, से वर्धित करे आमादेर मनेर आकाशके, तार मध्ये आछे एकटि गभीर वाणी, विश्वप्रकृतिर मतोइ से आमादेर शान्ति देय एवं चित्तके मर्यादा दिये थाके। (आश्रमेर रूप ओ विकाश, रचनावली-11, 737)

ये संस्कृत जाने ना से भारतीय संस्कृतिर विषय जानिते पारे ना। आमि यदि संस्कृत ना जानिताम ताहा हइले वांला भाषार एमन कविता लिखिते पारिताम ना। सकल भारतवासीरइ संस्कृत शिक्षा करा दरकार। (रवीन्द्रनाथठाकुरः)

युगनायकस्य स्वामिनः विवेकानन्दस्य संस्कृतवाङ्मयसन्दर्भे अभिमतं स्मर्तव्यम्।

"It (Veda) will kill out superstitions." "Who told you to neglect spirituality and Sanskrit learning?"

The very sound of Sanskrit words gives a prestige and a power and a strength to the race.

Sanskrit and prestige go together in India. As soon as you have that, none dares say anything against you. That is the one secret, take that up.

The only safety, I tell you, who belong to the lower castes, the only way to raise your condition is to study Sanskrit.

Why do you not become Sanskrit scholars? Why do you not spend illions to bring Sanskrit education to all castes of India? That is the

question. The moment you do these things, you are equal to Brahmin.    (Swami Vivekananda)

आमादेर वैषयिक, मानसिक ओ आध्यात्मिक जीवनेर दिके संस्कृतेर विशेष उपयोगितार कथा आमरा विवेचना करे देखते पारि। संस्कृत भारतेर महत् ऐतिह्य, ये ऐतिह्य भारतात्मार धारक।

(जातीय-अध्यापकः, डा.सुनीतिकुमारचट्टोपाध्यायः)

बाल्यकाले संस्कृत पडनि राजेन। ... संस्कृतेर मत वैज्ञानिकभाषा जाते आर नाइ। संस्कृत तो विश्वेर प्राण। संस्कृतेर एक एकटि शब्द मानुषके अनेक आविष्कारेर दिते प्रवृत्त करते पारे।

(आचार्यप्रफुल्लचन्द्र, भारतेर राष्ट्रपति डा.राजेन्द्रप्रसाद के लेखा पत्र थेके)

"I believe in the great power which Vivekananda used to asscribe to Sanskrit. We are unnecessarily frightened by the difficulty of learning Sanskrit. And that it must not be forgotten that such a knowledge of Sanskrit gives one a master-key to the knowledge of the majority of Indian languages not exceeding the southern group."

"Without the study of Sanskrit one cannot become a true Indian and a true learned man."

"Sanskrit is like the river Ganga for our languages. I always feel that if it were to dry up the regional languages also would lose their vitality and power. It sees to me that an elementary knowledge of Sanskrit is essential." (Mahata Gandhi)

The past has gone and the present is with us and we work for the future. But I have no doubt that whatever shape that future may take, one of the biggest, the strongest and the most powerful and the most valued of our legacies will be the Sanskrit language.

If I was asked what is the greatest treasure which India possesses and what is her finest heritage, I would answer unhesitatingly that it is the Sanskrit lanaguage and literature and all that it contains. This is a magnificent inheritance and so long as this endures and influences the life of our people, so long will the basic genius of India continue. If our race forgot Buddha, the Upanishads and the great epics (Ramayana and Mahabharata), India would cease to be India."

(Jawaharlal Nehru)

Sri Jawaharlal Nehru made the statement before the Sanskrit Comission that Prof. Oppenheier, the famous American Automic scientist, spends considerable tie in reading Sanskrit and Pali .. .. Sri Nehru also said- I would personally like as any Indians as possible to know Sanskrit which is the very basis of our culture. .. ..

The great Sanskrit Language that bound us together from Himalayas to cape Comarine.

Without a through knowledge of Sanskrit, our culture, our literature, our regional Languages, our Arts and our History inshort our whole life will ever remains and unsolved puzzle for us.

Our whole culture, literature and life would remain incomplete so long as our scholars, our thinkers and our educationists remain ignorant of Sanskrit.

Sanskrit is the language of Indian culture and inspiration, the language in which all her past greatness, her rich thought and her spiritual aspirations are enshrined .... Sanskrit has not only been the treasure-house of our past knowledge and achievmeents in the real of thought and art, but it has also been the principal vehicle of our nation's aspirationa and cultural traditions, besides being the source and inspiration of India's modern languages.

(Dr. Rajendra Prasad)

Samskrit has moulded the minds of our people to the extent to which they theselves are not conscious. Sanskrit literature is national in one sense, but its purpose has been universal. That was why it coanded the attention of people who were not followers of a particular culture.

(Dr. S. Radhakrishnan)

The culture of Sanskrit and Sanskrit literature is actually the culture of synthesis and assiilation. The essage of Sanskrit literature is one of humantis, of unity of humankind, of values, of peace and mutual understanding and of harminious developent of the individual and the society. Acquaintance with such literature can only elevate and widen one's outlook. Far fro being obscurantist, the Sanskrit literature can be a positive force for progress and growth in the right direction.

(Dr. Sankar Dayal Sharma)

Sanskritis thus for Indian the symbol and substance of its national unity and as a connecting bond with Asia and the world .. .. To study and disseinate Sanskritaong the people, not as an ideological fetish but as a living and rich language, would not only be a tribute to Kalidasa but way of preparing ourselves for the future.

(K.R. Narayanan)

"Sanskrit language, as has been universally recognised by those copetent to for a judgement, is one of the most magnificent, the most perfect, the most prominent and wonderfully sufficient literary instrument developed by the human mind."

"It is of the utost value to a nation, a human group-soul, to preserve its language and to make of it a strong and living cultural instrument. A nation, race or people which loses its language, cannot live its whole life or its real life."

(Sri Aurobindo)

India's Law Minister Dr. B. R. Ambedkar is among those who have sponsored Sanskrit as the official language of the Indian Union. One of his supporters is Dr. B.V. Keskar, Deputy Minister of External Affairs and another is Naziruddin Ahed.

Questioning about this to him Dr. Abmedkar told PTI correspondent this evening "What is wrong with sanskrit?"

Amendment seeking Sanskrit to be the India's official language will be taken up in the Constitument Assembly when the question of official language is considered by the House.

The amendment reads– 310/A1. The official language of the Union shall be sanskrit.

(The Sunday Standard, 11 Sept. 1949)

Babasaheb Dr. Ambedkar made a press statement where in he stated that Sanskrit should be made the National Language of free India.

The Nobel Laureate physicist, Dr. C.V. Raman, believed that Sanskrit was the only

language that could be the national language of India. He said, "Sanskrit flows through our blood. It is only Sanskrit that can establish the unity of the country." Sir C.V. Raman went a little further. He said that Sanskrit should be declared as the lingua franca of India.."

"Panini's grammar is not only considered a masterpiece of close reasoning and artistic arrangement, but remains till today unsurpassed in its economy of words to describe linguistic features."

(Dr. Rajaramanna)

Sanskrit is well suited to be the national language of India. It would prove an efficient instrument and solve all difficulties in the way of national intigration. We must never forget that the other of almost our regional language through out the length breadth of India, sanskritic is well known. The people are careonial and cultural occassion, I think it will require only a little persuasine effort to make the people regards the Sanskrit language as their National Language.

(Dr. Kailash Nath Katju)

## 6. संस्कृतविषये महम्मदीयविदुषामभिमतम्

Who proposed that the national language of India should be Sanskrit. He asked rhetorically, "If you have to adopt a language, why should you not have the world's greatest language?" He also quoted Dr. Shaidullah, Professor of Dhaka University and a great Sanskrit scholar, as saying, "Sanskrit is the language of every man, to whatever race he may belong.

(Najiruddin Ahed)

भारतीय परमराओं और भारतीय वाङ्मय को जो नहीं जानता उसे में भारतीय नहीं मानता। प्रत्येक भारतीयों को चाहे वह हिन्दु हो या मुसलमान उसे संस्कृत का ज्ञान होना चाहिये। भारत की इस प्राचीन भाषा संस्कृत का ज्ञान अनिवार्यतः सब को होना चाहिये।

(सर वदरुद्दिन तायेवजी)

अहं जानामि ज्ञानानां प्राचुर्यं संस्कृते विद्यते। यस्यैव अधुना वैज्ञानिकाः प्रयोगविद्याविदश्च भृशम् उपयोगं कुर्वन्ति। वेदानां विशेषतः अथर्ववेदस्योपरि गवेषणमधुनातीवावश्यकम्। तत्र हि भेषजं वैमानिकविज्ञानं पदार्थविज्ञानम् इत्येतत्सम्बद्धानां विज्ञानानां विषये नैकानि महत्त्वपूर्णानि सूचनानि सन्ति सन्निहितानि।

(ए.पि.जे.अब्दुलकलाम्)

भूतले संस्कृतभाषा कामधेनुः प्रकीर्तिता।
जननी सर्वभाषाणां विज्ञानस्योपकारिणी॥

(पण्डित गुलाम दस्तगीर आब्बास आलि विराजदार)

If Sanskrit would be divorced from the everyday life of the asses of this country, a light

would be gone from the life of the people and the distinctive features of Hindu culture which have won for it an honoured place in world-thought would soon be affected to be great disadvantage and loss both of India and of the world.

(Sir Irza Isail)

## 7. संस्कृतविषये पाश्चात्य-मनीषिणामभिमतम्

The language of Sanskrit of a wonderful structure, more perfect than Greek, more copious than Latin and more exquisitely refined than either. Human life would not be sufficient to make oneself acquainted with any considerable part of Hindu literature. (Sir William Jones)

Such is the marvellous continuity between the past and the present in India, that inspite of repeted social convulsions, religious reforms and foreign invasions, Sanskritay be said to be the only language that is spoken over the whole extent of that vast country. We can hardly understand how, at so early a date, the Indians had developed ideas which to us sound decidedly modern. Some of the riddles of the future find their solution in the wisdom of the past. ... .... Sanskrit is the greatest language in the world the most wonderful and perfect. (Prof. Maxuller)

India was the motherland of our race and saskrit the other of Europe's languages .. .. other India is in any ways the other of us all.

(Will Durant)

India, though it has, as we have seen, more than 500 spoken dialects, has only one sacred literature, accepted and revered by all .. however diverse in race, dialect, rank and creed. That language is Sanskrit and that literature is Sanskrit literature, .. ..the only quarry whence the requisite aterials may be obtained for improving the vernaculars or for expressing important religious and scientific ideals.

(Monior Williams– Hindusim, p-13.)

Sanskrit literature although a symbol of Indian culture is much more than it is universal and belongs to the world.

(Dr. Ludwick sternback)

The intellectual debt of Europe to samskrit literature has been undeniably great. It may perhaps become greater still in the years that are to come. We (Europeans) are still behind the making even our alphabet a perfect one.

(Prof. Macdonell)

Sanskrite bodided the great mass of knowledge that the mancestors of modern Indians had accusmulated by experience and thought.

(Richardson)

It is impossible to conceive a language so beautifully musical or so agnificently grand.

(Prof. H. H. Wilson)

The most beautiful perhaps of all languages.

(Prof. A. Pictat)

Sanskrit is the unsurpassed zenith in the whole developent of languages yet known to us.

(Wilhel Von Huboldt)

Sanskrit is the origin of modern languages of Europe. (R. Dubois)

Sanskrit was at one time the only language of the world. It is more perfect and copious than Greek and Latin. (Prof. Bopp)

A Language to which we all turn for enlightenent can not be dead.We all aquire knowledge from Sanskrit.

(Prof. Paul Deussen)

Sanskrit and India are inseparably connected inspite of all the transitory harangues of politicians. (Dr. Louis Renou)

Sanskrit and computers are a perfeet fit. Not to mention the rich endowonent it will provide in the arena of future counication.

(NASA, Researcher, Rick Briggs)

## 8. उपसंहारः

उपसंहारे अस्माभिः इदमेव वक्तुमिष्यते यत् - बहुभिः भाषाभिः प्रदेशैरनेकैः सम्प्रदायैः मतैश्चासङ्ख्यैः विभक्तोऽपि देशोऽयम् अनन्तवैचित्र्यसमूहस्य लीलाक्षेत्रम्। संस्कृतमेव बहुधा विभक्तस्य भारतस्यैकसूत्रमासीदस्त्यायतौ च स्यादेव। आन्तर्जातिकक्षेत्रे भारतस्य मर्यादा सम्मानो वा संस्कृतेनासीत्। सा च संस्कृतिः संस्कृताश्रिता। भारतस्य परिचयार्थं समूर्णे विश्वे यो भारततत्त्वपाठ्यक्रमो वर्तते, तत्र भारतस्य परिचयः संस्कृतवाङ्मयाधारितोऽस्ति। अक्सफोर्ड-विश्वविद्यालयात् डीलिट् उपाधिप्राप्त्यनन्तरं रवीन्द्रनाथेन प्रतिभाषणं कृतं संस्कृतेन। शान्तिनिकेतनागतान् वैदेशिकान् प्रतिनिधिगणान् संस्कृतेन समवर्धयत। सोभियेत-रशियादेशं प्रति मैत्रीयात्रायां गतस्य भारतीयराष्ट्रपतेः डा.राजेन्द्रप्रसादस्य सम्माननं तत्रत्येन सर्वकारेण संस्कृतेनैव कृतमासीत्। प्रस्तुतेन प्रबन्धेन अस्माभिः संस्कृतमेव भारतस्य परिचायकमिति प्रमाणयितुं यत्नो विहितः। इतिहासे कोऽपि देशः कापि सभ्यता वा नास्ति यत्र विद्वत्समाजः इतरभाषया स्वसृजनशक्तेः उत्कर्षं साधितवान्।

Clarence Aloney मतमत्रोल्लख्यं वर्तते- It would be impossible to find an example of a civilisation or cultural system that was in herently dynamic, creative, long-lasting and made a mark on history

in which the elite spoke a foreign language, Such a civilisation just does not exist.

संस्कृतेनैव भारतस्योत्थानं भवेत्। प्रसङ्गेऽस्मिन् सत्यरञ्जनव्यानार्जीवर्यो वदति- Indeed the role of Sanskrit in modern India is very great. In the words of Max muller - A people that can feel no pride in the past, in its history and literature, loses the ainstay of its national character. When Gerany was in the very depth of its political degradation, it turned to its avcient literature and drew hope for the future from the study of past.

संस्कृताद्दते भारतस्य परिचयो ज्ञानं वा न भवेत्। सर्वोच्चन्यायालयस्य मुख्यन्यायाधीशचरस्य वेङ्कटरामय्यमहोदयस्य वचनेन समाप्यतेऽयं प्रबन्धः। तद्यथा- There is no sense of Indianness without Sanskrit... इति।

संस्कृतिः संस्कृतं चैव भारतस्याक्षिणी तु द्वे।
तयोरुपेक्षया नूनमन्धकारो भविष्यति॥
संस्कृत्या संस्कृतेनैव भारतपरिचायकम्।
समासेन मया प्रोक्तं तदस्तु फलदायकम्॥



# संस्कृतस्य जीवद्भाषात्वसमीक्षा

## (आधुनिककालदृष्ट्या)

संस्कृतस्य जीवद्भाषात्वमिति अत्र विषयः। तत्रादौ स्वरूपं निर्वाच्यम्। मननशीलतायाः धर्मः यस्मिन् विद्यमानः स एव मानवः। अस्याः मननशीलतायास्तथा मनोभावप्रकाशस्य काचिदसाधारणी क्षमता मनुष्ये एव विद्यमाना अस्ति। अनेन विचारेण मानवः अन्येभ्यः जीवेभ्यः स्वतन्त्रः। सामान्यतः त्रिभिरुपायैर्मनुष्यः भावविनिमयं करोति। तद्यथा- सङ्केतेन, भाषया, लिप्या च। सङ्केतेन मनोर्भावस्य अंशमात्रमेव प्रकाशितं भवति। युक्तेः बुद्धेश्चाधिकारिणां मानवानां कृते एवंविधं साङ्केतिकभावविनिमयकौशलं कदापि पर्याप्तं भवितुं नार्हति। किञ्च तत् कौशलमकिञ्चित्करमेव। सामाजिकजीवानां मनुष्याणां प्रयोजनस्य सीमा नास्ति। तस्मात् भावविनिमयार्थं भषायाः प्रयोजनीयता अपरिसीमा। परिवारकेन्द्रिकाणां समाजसम्बद्धिनां मानवानामन्यैर्सह बोद्धिकसंयोग-स्थापनार्थमन्येभ्यः स्वकीयोद्देश्यनिवेदनार्थं तैर्सह भावविनिमयार्थं कर्मसंयोगस्थापनार्थञ्च भाषावश्यमेवापेक्षितास्ति। भाषामाध्यमेन मानवेषु संहतिचेतना दृढमूला भवेत्। यस्मिन् संसारे समाजे वा मनुष्यो निवसति तेन संसारेण समाजान्तर्भुक्तेनान्येन व्यक्तिना सह तस्य चिन्तायाः उद्देश्यस्य कर्मणश्च समता न्यूनाधिका तिष्ठेत्। भाषा अस्याः संहतिचेतनायाः समतायाश्च प्रधानसाधनभूतैव। मानविकसभ्यतायाः प्राथमिके पर्य्याये तेषां मानवानां सामाजिकी प्रवृत्तिरङ्कुरिता अजायत। किञ्च सेऽयं सामाजिकी प्रवृत्तिः भाषामवलम्ब्यैव क्रमशः पुष्पिता-पल्लविता च समभवत्। अपि च सेयं भाषा मानवान् पशुधर्म्मतः समुद्धृत्य मननशीलतायाः परिनिष्णाते मानवे धर्मे प्रतिष्ठापयन्ती विराजते। भाषा चिन्तायाः वाहनमात्रं न चिन्तायाः प्रसूतिरेव। लता यथा मञ्चाश्रयणं

विना न वर्द्धते, तथैव चिन्ताऽपि भाषालम्बनव्यतिरेकेण प्रकाशप्राप्तुमक्षमा। चिन्ता एव मानवं भाषितुं प्रेरयति। अतः एवं वक्तुं शक्यते यत् - मनुष्यैरुच्चारिता, अर्थवहा, बहुजनबोध्या, ध्वनिसमष्टिः हि "भाषा।" एकस्य जनस्य स्पृहां क्रियाशीलतां वा अन्यस्य जनस्य श्रवणेन्द्रियाभ्यां मर्मणि, हृदि च प्रसार्य्य तस्य जनस्य मनसि तथाविधायाः स्पृहायाः क्रियाशीलतायाश्चानुकूलप्रतिक्रियासृष्टिरेव भाषायाः प्रथमं तथा प्रधानं कार्य्यम्। सङ्केतेन तथा कर्त्तुं न शक्यते। सङ्केतः भाषायाः परिपोषकः यथा गीतस्य तालः स्वरस्य परिपोषकः। ध्वनिसमष्टिः भाषाविषयं व्यनक्ति भावं च स्फुटयति। अर्थात् ध्वन्यारूढ-प्रतीकद्योतनेन भाषायाः वैशिष्ट्यम्। भषायाः आदानप्रदानञ्च मुखान्मुखान्तरं प्रचलति। अतोच्यते भाष्यते अनया इति "भाषा।" अतः सामान्यतः एवं वक्तुं शक्यते भाषा मौखिकी एव। परस्परैर्सह वाग्व्यवहारः यया क्रियते सा "भाषा।" अर्थात् भाषा इत्युक्ते सम्भाषणस्य भाषा। पठनस्य लिखनस्य च या भाषा सा सम्भाषणभाषायाः स्थायिप्रतिनिधिरूपा। भाषास्वरूपवर्णनानन्तरं जीवद्भाषाश्रृङ्खलायां संस्कृतस्य प्रतिष्ठापनं क्रियते। जीवद्भाषा इत्युक्ते यया भाषया लोकाः वाग्व्यवहारं कुर्वन्ति, अप्राप्तशिक्षाः अपि शिशवः मात्रे पित्रे च स्वकीयं प्रयोजनादिकं निवेदयन्ति, यया च भाषया ते क्रन्दन्ति, हसन्ति, क्रीडन्ति च सा अवश्यमेव जीवद्भाषारूपेण स्वीकर्त्तुं शक्यते। जीवद्भाषायाः इदं मौनं लक्षणं विहाय परिशिष्टान्तराणि कानिचित् अपि समाकलयितुं शक्यते। भाषायाः समुत्पत्तिलग्नतः समुन्नतायाः विचित्ररूपतायाः सर्जनशीलतायाः साहित्यकृतेर्विद्यमानताऽपि समृद्धिशालिन्याः जीवद्भाषायाः एकं वैशिष्ट्यम्। अपि च विभिन्नदिग्गामिन्याः मननशीलायाः मानवमनीषायाः परमाभिव्यक्तिभूमिताऽपि समुन्नतायाः जीवद्भाषायाः वैशिष्ट्यान्तरं नूनमेव स्वीकार्य्यम्।

संस्कृतभाषायाः इतिहासे पर्य्यालोच्यमाने निरुक्तानि वैशिष्ट्यानि तस्यां भाषायां सुतरामेव सङ्गच्छन्ते। तथाहि भाषेऽयं सुप्राचीनकालतः अस्योपमहादेशस्य लोकभाषारूपेण प्रचलिता आसीद् इति तावत् बहुभिः विद्वद्भिः, गवेषकैः, प्रमाणपुरुषैश्च सूक्ष्मातिसूक्ष्माभिः वाचोयुक्तिभिः सुप्रतिष्ठापितम्। तादृशीनां वाचोयुक्तीनामप्रकल्पनीयत्वादस्माभिरपि संस्कृतभाषायाः लोकभाषात्वे दृढविश्वासपरायणैः विषयेऽस्मिन् पिष्टपेषणं कर्त्तुं नेष्यते। संस्कृतभाषां समाश्रित्य भारतीयमनीषायाः ज्ञानविज्ञानादि-विषयाणां समुत्पत्तिः समुल्लासः प्रकर्षश्च व्यजायन्त। न केवलं धर्म्मदर्शनादिचिन्तायां न वा साहित्यभावनायां संस्कृतभाषायाः प्रवहनशीलताः विनिबद्धाः वर्तन्ते, परन्तु समग्रस्य मानवजीवनस्य प्रतिदिनं प्रतिपदमपेक्षितानां चिकित्सा-विज्ञान-गणित-ज्योतिर्विज्ञान-वास्तुविद्या-स्थापत्यविद्याप्रभृतीनां सर्वासामेव विद्यास्थानानाम् आलम्बनभूतेयं संस्कृतभाषा। एतादृशीं समुन्नतां सुललितां विज्ञानप्रकृतिकां सर्वविद्यानिदानभूतां प्रागैतिहासिककालतः एतावत्पर्यन्तं जनगणैः सुचिरं व्यवह्रियमाणां व्यास-वाल्मिकी-कालिदासादिभिः निर्मीयमाणैः साहित्यसम्भारैः सम्भरितां भाषामिमां यथार्थतः अवगाहितुमसमर्थाः केचन पाश्चात्यप्रभावप्रभाविताः पण्डितम्मन्याः निर्जीवभाषारूपेण प्रतिपादयितुं यतन्ते। कदाचिदपि लोकभाषापदवीम् अनवगाहमाना केवलं प्राचीनमन्त्रतन्त्रादिभिः परिपूर्णा आधुनिक-वैज्ञानिकचिन्तया विरहिता भाषेयमवसितप्रयोजना इति तेषामाक्षेपः। भारतीयसंस्कृतेः गम्भीरं तात्पर्यं भाषायाः अस्याश्च महनीयां भावसम्पत्तिं बोद्धुमसमर्थाः ते उच्चैः ढक्कानिनादैः संस्कृतभाषां शिक्षाव्यवस्थातः राष्ट्रमानसादपि बहिष्कर्त्तुमिच्छन्ति। एतेषां मतवादाः नितरां प्रबलाः इत्यनुमातुं शक्यते। यतः विश्वसंस्कृतसम्मेलने तेषामभिमतं पर्यालोचनापदवीमवगाहते। यदि किमप्यलिकवचनमपि पुनः पुनः प्रचार्यते उद्घोष्यते च तर्हि तदपि क्वचित् क्वचित् सत्यवचनतया लोके

प्रतिष्ठां लभते। इयं हि जागतिकी रीतिः, परन्तु अस्याः अलीकायाः सम्प्रचारणायाः सम्प्रधारणायाश्च अवश्यमेव खण्डनं संस्कृतज्ञैः कर्तव्यम्। अतः अस्याः सङ्गोष्ठ्याः परिचालकैः संस्कृतभाषायास्तथा तन्मूलिकायाः भारतीयसंस्कृतेश्च परमरहस्यवेदिभिः सङ्गोष्ठ्यारन्यतम-विषयरूपेण (संस्कृतभाषायाः जीवद्भाषात्वविमर्षणरूपः अन्यतमविषयः निर्द्धारितः।) एतदर्थं तेभ्यः आयोजकेभ्यः नमस्कारपुरस्सरां हार्दिकीं कृतज्ञतां विनिवेद्य विभिन्नैः प्रमाणैः संस्कृतस्य जीवद्भाषात्वं प्रतिष्ठापयितुमुत्सहे। संस्कृतविरोधिनां संस्कृतमधिकृत्य महानाक्षेपः, ईदृशोऽस्ति, यत् संस्कृतमेकाभाषा अस्ति चेत्तर्हि भाषायाः सार्थकता परस्परभावविनिमयेन। अस्मिन् क्षेत्रे संस्कृतस्य भाषात्वं न सिद्ध्यति। यतो हि भाषामिमामाश्रित्य जनाः न व्यवहरन्ति। अर्थात् संस्कृतं केवलं पुस्तके आबद्धः अस्ति। पुस्तकस्य भाषेति।

१. केनचिदुक्तम् - "संस्कृतं व्याकरणे अस्ति, आचरणे नास्ति, कोशे अस्ति, देशे नास्ति साहित्ये अस्ति, समाजे नास्तीति।" अतएव, वस्तुस्थितिपरिसंख्यानादिदृष्ट्या, आदौ संस्कृतभाषा व्यवहारे अस्ति, दैनन्दिने जीवने अस्ति, सर्वविधभावविनिमयविधौ संस्कृतभाषामाश्रिताः जनाः नैके सन्ति, इत्यत्र कानिचित् प्रमाणानि उपस्थाप्यन्ते।

२. 8.12.1980 दिनाङ्के डॉ. डि. डि. शर्म्मणा लिखितः कश्चन प्रबन्धविशेषः "आरव टाइम्स" पत्रिकायां प्रकाशितः। डॉ. डि. डि. शर्म्मणा स्वकीये प्रबन्धे हिमाचलप्रदेशान्तर्गते 'लाहुल्' इति पार्वत्याञ्चले 'पत्तन्' तिन्नन् इत्युपत्यकयोः निवसतः प्राचीनाचार्य्यसम्प्रदायान्तर्गतस्य संस्कृतंकथयतः 'चिनाल्' नाम कस्यचन गणस्योल्लेखः कृतः। पूर्वमुत्तरपश्चिमभारतस्य जनानां 'चिनाल्' जनानां मातृभाषारूपेण यत् संस्कृतमासीत् तदत्वेऽपि पूर्वोक्तानां 'चिनाल्' जनानां मातृभाषा तादृशं संस्कृतमिति सुस्पष्टं प्रतिभाति। साम्प्रतमपि तैः व्यवह्रियमाणा भाषा

भाषान्तरैरप्रभाविता सती आर्यसंस्कृतेः संस्कृतभाषायाः कथितरूपं मूलतः अपरिवर्त्तितः रक्षति इति।

३. कर्णाटकप्रदेशस्य 'मुत्तुरु'नाम ग्रामविशषः साम्प्रतं संस्कृतजगतः वार्त्ताशिरोनाम्नि समायातः। हिन्दुसेवाप्रतिष्ठानस्य संस्कृतशाखासदस्यैः संस्कृतसम्भाषणान्दोलनस्य प्रवक्तृभिः ग्रामोऽयं संस्कृतग्रामरूपेण परिणामितः। तेषां सदस्यानां निरलसप्रचेष्टया तत्रत्याः अनुन्नताः, दलिताः अधिवासिनः संस्कृतभाषायां भावविनिमयविधौ कुशलिनः सञ्जाताः। तत्रत्याः सर्वे ग्रामजनाः आबालवृद्धवनिताः संस्कृतभाषामेव साम्प्रतं मातृभाषारूपेण स्वीकुर्वाणाः विद्यन्ते। कर्णाटके एवंविधाः पञ्चदशसंख्यकाः संस्कृतग्रामाः सन्तीत्ययं समाचारः प्रकाशितः।

४. संस्कृतेन सम्भाषणकुर्वतां परिवाराणां संख्या एषु दिनेषु वर्द्धमाना अस्ति, तादृश-परिवाराणां दक्षिणभारतीयसम्मेलनं गतडिसेम्बरमासस्य २४-२५ दिनाङ्कयोः कर्णाटके 'शिवमोग्गा'नगरे प्राचलत्। १७५ परिवाराणां ३५० सदस्याः सम्मेलने भागमवहन्। समाचारोऽयं संस्कृतस्य जीवद्भाषात्वं प्रमाणयति।

५. वेङ्गुलुरुनगरे अवस्थिते गिरिनगरे संस्कृतभारत्याः कार्यालयः 'अक्षरम्।' अक्षरे अहोरात्रं संस्कृभाषया वार्तालापः भवति, अक्षरकेन्द्रितानि बहूनि संस्कृतगृहाणि आदर्शसंस्कृतगृहाणि च विद्यन्ते। तेषु गृहेषु नक्तन्दिवं संस्कृतभाषया प्रचलति वाग्व्यवहारः।

६. तत्र संस्कृतबालकेन्द्राणि सन्ति, यत्र बालाः संस्कृतभाषया क्रीडन्ति, क्रन्दन्ति, हसन्ति, गायन्ति च ईदृश-बालकेन्द्राणि पुरीनगरे अनेकानि सन्ति।

७. कर्णाटके 1998 सम्बत्सरे दशबालाः संस्कृतमातृभाषिणः आसन्, इदानीमेव सा संख्या बर्द्धिता।

८. अनेकेभ्यः वर्षेभ्यः पूर्वमेव 'सर्वगन्धा' पत्रिकायाः सम्पादकः पं.वीरभद्रमिश्रः स्वकीयं गृहं संस्कृतगृहरूपेण सज्जीकृतवानासीदिति वृत्तं दूरदर्शने समाचारपत्रिकायां च प्रकाशितमभवत्। एवं राष्ट्रस्य विभिन्ने प्रदेशे विच्छिन्नरूपेण अनेकानि संस्कृतगृहाणि स्युः।

९. भारतवर्षस्य जनगणनायाः प्रतिवेदनात् ज्ञायते यत् संस्कृतभाषिणां संख्या क्रमशः वर्द्धमानाः सन्ति। वर्षानुसारं जनगणनायाः संख्या एवं सन्ति।

| गणनावर्षाणि | संस्कृतभाषिणां संख्या |
|---|---|
| 1951 | 555 |
| 1961 | 1944 |
| 1971 | 2212 |
| 1981 | 6106 |
| 1991 | 49736 |

1981 तः 1991 जनसंख्याधारेण एवं वक्तुं शक्यते संस्कृतभाषिणां संख्या ७१.४५४ प्रतिशतं नाम अष्टगुणिता वर्द्धिता अस्ति। 1991 जनगणनातः इदं परिस्फुटं भवति यत् भारतवर्षस्य प्रत्येकेऽस्मिन् प्रदेशे संस्कृतभाषिणः न्यूनाधिकतया निवसन्ति। "प्रचलतः संस्कृतभाषिणान्दोलनस्य प्रभावेण परकाले सम्पन्नायां जनगणनायां संस्कृतभाषिणां संख्या लक्षाधिका कोट्यधिका वा भवेदित्यत्र नास्ति सन्देहावकाशः।

१०. भारतवर्षे द्वितीयकक्ष्यातः स्नातकोत्तरकक्ष्यां यावत् संस्कृतपठतां छात्राणां संख्या त्रिकोटिपरिमिता अस्ति। नाम, भारतवर्षस्य जनसंख्यायाः ३ प्रतिशतम्।

११. प्राथमिकस्तरादारभ्य स्नातकोत्तरस्तरं यावत् संस्कृताध्यापकानां संख्या पञ्चलक्षापरिमिता अस्ति।

१२. भारतवर्षस्य संसद्यपि संस्कृतेन शपथग्रहणं कृतवतां सांसदानां संख्या वर्द्धमाना इति दरीदृश्यते। १०म लोकसभायां १०प्रतिशतं सांसदाः संस्कृतेन शपथग्रहणमकुर्वन्। ११श लोकसभायां सा संख्या ४६ आसीत्। १३श लोकसभायां सा संख्या बर्द्धिता सती ६५ अस्ति। एवं विभिन्नेषु प्रदेशेषु विधानसभासु विधायकाः संस्कृतेन शपथं नयन्ति। इयं संस्कृतेन शपथग्रहणपरम्परा वर्द्धते एव।

१३. देहल्यां 'तालकोट्रा'स्टेडियम-मध्ये आयोजिते संस्कृतसङ्गमे २५००० संस्कृतसम्भाषणसमर्थानां समागमः।

१४. उज्जयिन्यां संस्कृतसङ्गमे ५००० संस्कृतभाषिसमागमः।

१५.उत्तरप्रदेशे 1995वर्षे आरब्धसंस्कृतसम्भाषणाभियानस्य प्रभावेण प्रदेशेऽस्मिन् १८,००००० जनाः संस्कृतसम्भाषणाभ्यासं कृतवन्तः। केवलं वाराणस्यां ५०,००० जनाः संस्कृतसम्भाषणाभ्यासम् अकुर्वन्।

१६. भद्रके 1997तमे वर्षे 'लोकसंस्कृतसञ्जीवनी' इत्यस्य समापने समारोहे १५००० छात्राणां (संस्कृतसम्भाषणाभ्यासं कृतवतां) सम्मेलनमभवत्।

१७. राजस्थानस्य भरतपुरमण्डलान्तर्गततायां 'कामा'नगर्य्यां 'लोकसंस्कृतसञ्जीवनी' कार्यक्रमस्य समापनोत्सवे सहस्राधिकानां संस्कृतसम्भाषणसमर्थकानां छात्राणां समावेशश्चेत्यादयः समाचाराः संस्कृतस्य जीवद्भाषात्वं सूचयन्ति।

१८. संस्कृतभाषया व्यवहरन् अधिवक्ता इति शीर्षकः कश्चन रोचकसमाचारः पत्रिकायां प्रकाशितः। 1946तमवर्षादारभ्य स्वकीये वृत्तिजीवने श्यामजी उपाध्यायः नाम अधिवक्ता संस्कृतेनैव स्वकीयं वादमुपस्थापयन् संस्कृतभाषा सर्वविधभावविनिमयविधौ समर्था इति प्रमाणं कृतवान् अस्ति। विंशतिवर्षेभ्यः तेन प्रवर्त्तितेषु विवादेषु न

कस्मिन्नपि न्यायनिर्णयः त्वद्विरुद्धं गतः इत्येतदेव संस्कृतस्य जीवद्भाषात्वस्य प्रमाणम्।

१९. राष्ट्रजीवने संस्कृतस्य जीवद्भाषात्वव्यवस्थापनम् अस्माकं राष्ट्रजीवने संस्कृतस्य महत्स्थानमस्ति। विविधासु राष्ट्रियसंस्थासु प्रेरणादर्शवाक्यत्वेन संस्कृतस्य भूरिशः प्रयोगः संदृश्यते, मानवेषु नैतिकमूल्यबोधानां जागरणार्थं मानवतायाः सम्प्रसारणार्थञ्च संस्कृतमपरिहार्यत्वेन परिगृहीतमस्ति। अस्माकं राष्ट्रगीतम्, वन्देमातरम्....... संस्कृतेनैव रचितमस्ति। जनगण मन अधिनायक....... इति अपरं जातीयसङ्गीतं प्रायः संस्कृतमध्युसितमेव। अस्माकं स्वतन्त्रतायाः मूलमन्त्रः 'वन्देमातरम्' एतदपि संस्कृतेन। राष्ट्रियसंस्थानां कानिचिदादर्शवाक्यानि उपस्थाप्यन्ते। तद्यथा- भारतसर्वकारस्य- सत्यमेव जयते, लोकसभाध्यक्षस्य- धर्मचक्रप्रवर्त्तनाय, संसदः- अयं निजपरोवेति गणना लघुचेतसाम्, सर्वोच्चन्यायालयस्य- यतो धर्मस्ततो जयः, आकाशवाण्याः- बहुजनहिताय बहुजनसुखाय च, दूरदर्शनस्य- सत्यम् शिवम् सुन्दरम्, दूरसञ्चारविभागस्य- अहर्निशं सेवामहे, वाणिज्यविभागे- वाणिज्ये वसति लक्ष्मीः, स्थलसेनाविभागस्य- यशो लभस्व, नौसेनाविभागस्य- शं नो वरुणः, वायुसेनाविभागस्य- नभः स्पृशं दीप्तम्, असामरिकोड्डयनविभागस्य- विज्ञानमेव परमं ज्योतिः, जीवन वीमा निगमस्य- योगक्षेमं वहाम्यहम्, वि. आइ. एस् इत्यस्य (भारतीय स्टाण्डार्ड व्युरो) - मानकः पथप्रदर्शकः, युनिट ट्रष्ट इत्यस्य- सुविनियोगात् समृद्धिः, नैशनल वुक् ट्रष्ट इत्यस्य- एकः सूते सकलम्, प्रत्नतत्वविभागस्य-प्रत्नकीर्त्तिमपावृणु, विश्वभारतीजातीयविश्वविद्यालयस्य यत्र विश्वं भवत्येकनीडम्, एवंक्रमेण इयमावली विस्तृता अस्ति। विभिन्नप्रान्तस्तरीयसंस्थानां, धर्मीयसेवासंस्थानाम्, आदर्शवाक्यत्वेन संस्कृतस्याश्रयणं भाषायाः अस्याः जीवत्स्वरूपं द्योतयति। अत्र संस्कृतप्रतिष्ठानानामादर्शवाक्यस्योल्लेखः मया न कृतः। राष्ट्रपक्षतः

संस्कृतदिवसपालनं किञ्च संस्कृतवर्षपालनमपि संस्कृतस्य राष्ट्रस्तरे कियत् गुरुत्त्वमस्ति तत् सूचयति। राष्ट्रपक्षतः प्रतिवर्षं संस्कृतविदुषां सम्मानः, संस्कृतच्छात्राणां कृते राष्ट्रस्तरे वाक्प्रतिस्पर्धा, साहित्य-अकादमी-पुरस्काराः, विभिन्नसंस्थापक्षतः संस्कृतविद्वद्भ्यः सम्मानप्रदानादिकञ्च किं भाषायाः अस्याः सजीवतां, नित्यप्रवहनशीलतां न प्रदर्शयति?

**प्रात्यहिकजीवने संस्कृतम्-**

देशस्यास्य ८० प्रतिशतं जनाः स्वधर्मपालने यजन-याजनादि-दैवपैत्रादिकर्म्मसु संस्कृतमाश्रयन्ति। अत्र संस्कृताश्रयणमनिवार्यम्। न केवलमस्माकं देशे यत्र यत्र भारते उद्भूतानां (धर्म्माणां) सनातनधर्म्मसम्प्रदायानां शाखाः सन्ति, तत्र तत्र प्रातः प्रभृति सायान्तं जीवद्भाषारूपेण संस्कृतमात्मानं प्रकाशयति अन्यान् प्रकाशते च।

२०. देशस्य विभिन्नासु प्रादेशिकभाषासु ५०- ८५ प्रतिशतपर्यन्तं संस्कृततद्भव-तत्सम-शब्दाः सन्ति। प्रायः सर्वेऽपि भारतीयाः (संख्याधिकाः) परोक्षतया मातृभाषारूपेण संस्कृतं व्यवहरन्ति। यथा-वङ्गप्रदेशे-विभिन्नेषु मण्डलेषु तत्तन्मण्डलप्रभावितां मूलभाषातः काञ्चित् विकृतिमापन्नामुपभाषां भाषमाणाः सन्तोऽपि ते जनाः वङ्गभाषिणः इति परिचीयन्ते। एका प्रादेशिकी भाषा तत्तदञ्चलभेदतः किञ्चिद्विलक्षणतया व्यवह्रियमाणापि तादृश-प्रादेशिक-भाषारूपेण तत् प्रदेशस्थितानां मातृभाषारूपेणाभिहिता भवति। इयमेव रीतिः अन्यासु प्रादेशिकभाषासु अपि परिलक्ष्यते। अनया रीत्या संस्कृतशब्दबहुलां संस्कृतरचनारीति-प्रचुरां तत्तत्प्रादेशिकभाषां भाषमाणाः जनाः संस्कृतभाषाभाषिणः भवितुमर्हन्ति न वा विचारयन्तु भवन्तः। देशस्य शिक्षितजनाः प्रवादवाक्यरूपेण - उपदेशवाक्यरूपेण - नीतिवाक्यरूपेण च प्रतिपदं संस्कृतश्लोकानुद्धरन्ति। यथा- 'न ययौ न तस्थौ', 'शठे शाठ्यं समाचरेत्', 'मधुरेण समापयेत्', विद्वान् सर्वत्र पूज्यते, परित्राणाय

साधूनाम्, वासांसि जीर्णानि, स्वधर्मे निधनं श्रेयः, प्रहारेण धनञ्जयः, मुर्खस्य लाठ्यौषधम्, नान्यः पन्थाः, शृण्वन्तु विश्वे, जननी जन्मभूमिश्च, पिता स्वर्गः, श्रेयांसि बहुविघ्नानि, हितं मनोहारी च दुर्लभं वचः, कालस्य कुटिला गतिः, दैवी विचित्रा गतिः, धर्मो रक्षति रक्षितः, ऋणं कृत्वा घृतं पिबेत्, नराणं मातुलक्रमः, नियतिः केन बाधते, यथा बाधति बाधते संहतिः श्रेयसी पुंसाम्, संघ-शक्तिः कलौ युगे, कीर्त्तनीयः सदा हरिः, मुनीनां च मतिभ्रमः, शिरो नास्ति शिरःपीडा, नास्ति ग्रामः कुतः सीमा, आत्मानं सततं रक्षेत्, यथा राजा तथा प्रजाः, यस्मिन् देशे यदाचारः, अङ्गारः शतधौतेन, मातृवत् परदारेषु, इत्यादयः संस्कृतप्रवादाः सूक्तयः, लोकोक्तयश्च सामान्यजनानां मुखेषु मुखेषु विलसन्ति, एवं विदुषां विचारे, साधूनां प्रवचने, भाषणे, प्राबन्धिकानां प्रबन्धने संस्कृतस्योल्लेखः तेषामुत्कर्षं बर्द्धयति वैदुष्यञ्च प्रकाशयति। प्रात्यहिकजीवने व्यवह्रियमाणेषु रूप्यकादिबहुषु वस्तुषु संस्कृतलेखनं दरीदृश्यते।

२१. सर्वेषां भारतीयानां बाल्यकालतः संस्कृतस्य श्रवणसंस्कारः अस्ति। उत्तरप्रदेशादिहिमचलान्तं सप्तसु राज्येषु संस्कृतमनिवार्यं पाठ्यमानमस्ति। अन्येषु राज्येषु ऐच्छिकरूपेण च अस्ति। अस्मात् कारणात् भारतस्य शिक्षितजनेषु ३३ प्रतिशतजनानां संस्कृतस्य पठनात्मकम् अवगमनात्मकञ्च ज्ञानमस्त्येव।

**वैद्युतिकसमाचारमाध्यमे संस्कृतम् –**

अस्माकं देशस्य आकाशवाणीतः दिने वारद्वयं संस्कृतसमाचारस्य प्रसारणं भवति। सप्ताहे रविवासरे दूरदर्शनेन संस्कृतसमाचारस्य प्रसारणमपि क्रियते। २२. संस्कृतभाषया त्रीणि चलनचित्राणि निर्मितानि, बहूनि लघुचित्राणि च निर्मितानि। तेषु द्वयोः चलनचित्रोः सर्वश्रेष्ठचलनचित्रत्वेन 'स्वर्णकमलम्' इति राष्ट्रियप्रशस्तिप्राप्तिर्जाता। अनन्तरं 'ब्रह्मसूत्राणि' इत्यपरं चलनचित्रं निर्माणाधीनमस्ति। संस्कृतधारावाहिन्यामपि प्रसारणं जातम्। अन्यासां

धारावाहिन्यामपि प्रसारणं दूरदर्शनेन कृतम्। महिषासुरमर्द्दिनीति सप्तशतीमहात्म्यस्य प्रसारणम् आकशवाणीतः, दूरदर्शनात् च प्रसारणं, कोट्यधिकाः वङ्गीयाः श्रद्धया श्रृण्वन्ति, पश्यन्ति च। संस्कृतभाषामाश्रितानां महाकाव्यानां पुराणानां कथानां नाटकानाञ्चाधारेण रामायण-महाभारत-चाणक्य-श्रीकृष्ण-वेताल पञ्चविंशति-जय हनुमान-जय माता की-मा शक्ति-विष्णुपुराण-ओं नमः शिवाय-जय गङ्गामैया- जय मा लक्ष्मी प्रभृतीनां निर्मितानां दूरदर्शनेन प्रचारितानाञ्च धारावाहिकनाट्यानां सर्वाधिकजनसमाकर्षकता संस्कृतस्य लोकग्राह्यत्वं जनप्रियत्वं च प्रमाणयति। तेषु धारावाहिकनाट्येषु संस्कृतबहुलशब्दानां प्रयोगः न कस्यापि क्लेशाय, अपितु आकर्षकाय सुखबोधाय च प्रतिभाति। तेषु बहुषु चलनचित्रेषु संस्कृतशब्दाः, संस्कृतमन्त्राः, प्रवादाः श्लोकाश्च श्रुतिपथमायान्ति। वेद-उपनिषत्-गीता-चण्डीप्रभृतिस्तोत्रादिसम्बलितानां संस्कृतध्वनिमुद्रिकानां विक्रयणम् ईर्ष्याजनकम्। पल्लवप्रकाशनस्य ध्वनिमुद्रिका-संस्कृतरवीन्द्रसङ्गीतमिति ध्वनिमुद्रिका- महिषासुरमर्द्दिनीति संस्कृतसप्तशतीमाहात्म्यग्रथितां वीरेन्द्रकृष्णभद्रस्य ध्वनिसमन्वितानां ध्वनिमुद्रिकानां च बाहुल्येन क्रयार्थमन्वेषणा संस्कृतभाषायाः अमृतत्वं घोषयति। आञ्चलिकस्तरे आकाशवाणीतः संस्कृतशिक्षावर्गस्य सम्प्रचारः भवति।

२३. प्रत्येकमाकाशवाणीकेन्द्रेण मासत्रये एकवारं संस्कृतकार्य्यक्रमः अनिवार्यतया प्रसारणीयः इति देहलीतः आकाशवाण्णी महानिर्देशकेन निर्देशः कृतः।

२४. इण्टरनेट्-आन्तरिकजालप्रपञ्चे संस्कृतसम्पर्किताः षड्विंशत्प्रकोष्ठाः सन्ति। विविधप्रतिष्ठानेषु सङ्गणक-संस्कृतमिति विषयमुररीकृत्य, दृढप्रत्रयन्त्राङ्गाणां (हार्डवेर) निर्माणं, प्रकमाणां निर्माणं, शोधकार्यादिकं प्रचलन्ति।

२५. सङ्गणकयन्त्रे सचित्रो वेदः, २६. सान्द्रमुद्रिकारूपेण भगवद्गीता, २७. संस्कृतभाषाशिक्षणाय 'सान्द्रमुद्रिका भाषिका' निर्मितास्ति। २८. शिशूनां कृते संस्कृतशिक्षणाय द्वादशध्वनिमुद्रिकाणां गुच्छः सज्जितोऽस्ति। २९. भगवतः वेङ्कटेश्वरस्य ब्रह्मोत्सवस्य शोभायात्राणां राष्ट्रियस्तरे धाराविवरणं संस्कृतेन प्रसारितमाकाशवाण्याः हैद्रावादकेन्द्रेण। ३०. अन्ध्रप्रदेशे कोब्बुरु इत्यत्र संस्कृतशिक्षकप्रशिक्षणवर्गस्य प्रतिदिनं घण्टाद्वयात्मककालांशस्य केवल् टि.भि.द्वारा साक्षात् प्रसारणं पुनः रात्रौ अपि घण्टाद्वयस्य पुनः सम्प्रसारणमभवदिति समाचारः पत्रिकायां प्रकाशितः। एतदतिरिच्य विभिन्नैः मठैः, विभिन्नैः सम्प्रदायैः, आध्यात्मिक-कथाप्रचारसन्दर्भे संस्कृतस्य प्रचारः भवति। यथा - महर्षि वैदिक चेनल्, इस्कन् टि.भि. (भक्तिवेदान्त) आध्यात्मिक चेनल् इत्यादयः प्रमुखाः सन्ति। संस्कृतमयस्तोत्रादिसम्बलितानां ध्वनिमुद्रिकानां सङ्ग्रहणेच्छा जनमानसे प्रबलतया अनुभूयते। लतामङ्गेशकर-अनुराधापौडवाल-प्रभृतीनां ध्वनिमुद्रिकानिबद्धानि संस्कृतस्तोत्राणि प्रायेण प्रतिगृहं श्रुतिपथमायान्ति। साहित्यप्रकाशनदृष्ट्या संस्कृतम् आधुनिके काले संस्कृतसाहित्ये विविधजातीयाः काव्यनाट्यकथालघुकथोपन्यासगीतिकाव्यप्रभृतयः सर्जनशीलाकृतयः याः परिलक्ष्यन्ते ताः संख्यागौरवेण क्वचित् क्वचित् गुणगौरवेण, विषयवैचित्र्येण च प्राचीनशताब्दीषु रचिताः संस्कृतरचनाः प्रतिस्पर्धितुं शक्नुवन्ति। पल्लवप्रकाशनस्य 'वदतु संस्कृतम्' लोकभाषाप्रचारसमितेः 'व्यवहार वाक्याणि' इति पुस्तकद्वयस्य लक्षाधिकसंख्यया विक्रयणमाधुनिकभाषापुस्तकप्रकाशकान् लज्जयति। सम्भाषणसन्देशस्य, 'चन्दमामा' संस्कृतसंस्करणस्य च लक्षाधिकसंख्यया विक्रयणं पत्रिकाजगति विस्मयावहम्। एतद्व्यतिरेकेणापि, दैनिक-साप्ताहिक-पाक्षिक-मासिक-त्रैमासिक-षाण्मासिक-वार्षिक-एवमाहत्य षष्ट्यधिकाः संस्कृतपत्रिकाः प्रकाशन्ते।

३१. पूर्वं संस्कृतपुस्तकप्रकाशकाः अङ्गुलिगण्याः आसन्। साम्प्रतं संस्कृतपुस्तकप्रकाशकानां दिनं दिनं वर्द्धनमपि संस्कृतस्य लोकग्राहित्वं ख्यापयति। चौखम्बाप्रकाशक-भारतीयविद्याप्रकाशन-मोतिलाल-वनारसीदास-नीताप्रकाशक-प्रतिभाप्रकाशकनागप्रकाशक-पल्लवप्रकाशक -राष्ट्रियसंस्कृतसंस्थान-विद्यापीठप्रकाशन-अकादमीप्रकाशनप्रभृतयः असंख्याः प्रकाशकाः संस्कृतपुस्तकानि प्रकाशयन्ति। गीताप्रेस-रामकृष्णमठ-भारतसेवाश्रमसंघ- अरविन्दआश्रम- भारतीयविद्याभवन - स्वाध्यायमण्डलप्रभृतीनां संस्थानां संस्कृतपुस्तकधर्मपुस्तकाणां च विक्रयणमाधुनिकपत्रिकाभ्यः पुस्तकेभ्यश्च अधिकमिति निश्चप्रचम्। आञ्चलिकभाषाभिः रचितानि संस्कृतशब्दबहुलानि कालजीविसाहित्यानि अद्यत्वेऽपि पाठकैः सहृदयैश्चादृतानि भवन्ति। कवीन्द्रस्य रवीन्द्रनाथस्य ठाकुरस्य, साहित्यसम्राजः वङ्किमचन्द्रस्य, शरच्चन्द्रस्य, प्रेमचन्द्रस्य, तुलसीदासस्य, अन्येषामाञ्चलिकसाहित्यिकानां च संस्कृतशब्दसम्भारैः सज्जितानां साहित्यानां पाठकसमाजे महान् समादरः संस्कृतमहत्वं ख्यापयति। इदानीन्तने कालेऽपि आञ्चलिकभाषासाहित्यिकानां रचनासु वाहुल्येन संस्कृतशब्दानां प्रभावः तत्तत् साहित्यकृतेरुत्कर्षं बर्द्धयति। न केवलं संस्कृतसाहित्येषु आञ्चलिकभाषानिबद्धेषु संस्कृतशब्दसम्पत्ति-विमण्डितेषु साहित्यषु संस्कृतमात्मनः अपरिहार्यत्वं घोषयति।

**प्रतिष्ठानेषु संस्कृतम्–**

भारते कामपि आञ्चलिकभाषामाश्रित्य विश्वविद्यालयाः न सन्ति। परन्तु "संस्कृतभाषामाश्रिताः द्वादशविश्वविद्यालयाः सन्त्येव। नवतिविश्वविद्यालयेषु संस्कृतविभागाः सन्ति। राष्ट्रियसंस्कृतसंस्थानसम्बद्धानि विद्यापीठानि, आदर्शमहाविद्यालयाश्च सन्ति। स्वैच्छिकविद्यालयाः महाविद्यालयाश्च सहस्राधिकाः सन्ति। सप्तसु राज्येषु प्राथमिकस्तराद् माधमिकस्तरं यावत् संस्कृमनिवार्यविषयरूपेण अस्ति। (म.प्र., उ.प्र., हि.प्र., विहारः, देहली,

राजस्थानम्, गुजराट्, इत्येतेषु)। विद्याभारती-अखिलभारतीय-शिक्षासंस्थानस्य १५००० विद्यालयेषु १५लक्षं छात्राः प्रतिवर्षं संस्कृतं पठन्ति। तेषु द्वितीयकक्ष्यातः एव संस्कृतपठनमनिवार्यम्। दशाधिकसंस्थानैः सरलसंस्कृतपरीक्षाः सञ्चाल्यन्ते। एकैकसंस्थानद्वारा लक्षाधिक-छात्राः परीक्षाः स्वीकुर्वन्ति। अष्टस्थानेभ्यः पत्राचारद्वारा संस्कृतशिक्षणयोजना चलति। सप्त संस्कृतसंस्थानानि (अकाडमी) सन्ति। शताधिकसंस्कृतप्रचारपरिसदः कार्यं कुर्वन्ति। शताधिकेषु वैज्ञानिकसंस्थानेषु संस्कृत-संङ्गणकविषयमधिकृत्य, संस्कृतशास्त्र-विज्ञानविषयमधिकृत्य च शोधकर्यं प्रचलति।" ३३. महाराष्ट्रे नान्देड्-मण्डले सगरोलि-ग्रामे संस्कृतमाध्यमेन विद्यालयः अस्ति। तत्र शिशुकक्ष्यातः - द्वादशकक्ष्यापर्यन्तं गणितविज्ञानेत्यादीनां विषयाणां पाठनं शिक्षणादिकं संस्कृतेन प्रचलति। ३४. पुण्यपत्तने श्रीबालमुकुन्द-संस्कृत-सांख्यमहाविद्यालयः अस्ति। तत्र वैशिष्टयं यत् स्नातकात् सर्वे वर्गाः सायंकाले प्रचलन्ति। ३५. भारते विद्यमानेषु अष्टसु मुक्तविश्वविद्यालयेषु, अन्यतमे कर्णाटक स्टेट ओपन युनिभार्सिटि इत्यत्र पदवीतः शिक्षाव्यवस्था अस्ति। विभिन्नेषु मठेषु, देवस्थानमित्येतेषु प्रतिष्ठानेषु पारम्परिकपद्धत्या सहस्राधिकाः वटवः संस्कृतं पठन्ति। किमनेन संस्कृतस्य जीवद्भाषात्वं न सिद्ध्यति?

**आन्तर्जातिकस्तरे संस्कृतम् -**

३६. भारताद्बहिः नेपाले महेन्द्रसंस्कृतविश्वविद्यालयः अस्ति। एकादशसंस्कृतमहाविद्यालयाः तदन्तर्गताः सन्ति। साधारण-माध्यमिक-संस्कृत-माध्यमिकविद्यालयेषु च संस्कृतशिक्षा प्रचलति। एतदतिरिच्य प्राचीनगुरुकुलपद्धत्या प्रचाल्यमानेषु शताधिक-विद्यालयेषु, सामान्यविद्यालयमहाविद्यालयविश्वविद्यालयेषु च संस्कृतशिक्षाव्यवस्था अस्ति। नेपालशासनेन माध्यमिकस्तरे संस्कृतमनिवार्यं स्वीकरणीयमिति घोषितम्। "नेपालदेशस्य आकाशवाणीतः संस्कृतसमाचारस्य प्रसारणम्

अपि भवति। वाङ्गलादेशे बह्वः चतुष्पाठ्यः सन्ति। जर्मनिदेशे संस्कृतस्य महती चर्चा भवति। भारतदेशात् पूर्वं तस्मिन् देशे रेडियो (आकाशवाणी) माध्यमेन संस्कृतकार्यक्रमाः प्रसारिताः अभवन्। "विश्वे पञ्चत्रिंशत्देशेषु त्रिशतपञ्चाशदधिकविश्वविद्यालयेषु संस्कृतस्य पाठः भवति।" शताधिकेषु वैज्ञानिकसंस्थानेषु संस्कृतं- संगणकम् - शास्त्रं - विज्ञानमिति विषयमाश्रित्य शोधकार्यं प्रचलति।

39. लण्डननगरे सैण्टजेम्स इण्डिपेण्डेण्ट स्कुल् इत्यत्र प्रथमकक्ष्यातः एव संस्कृतमनिवार्यतया पाठ्यते। अस्य शिक्षायतनस्य अपरा शाखापि विद्यते।

४०. आमेरिकादेशे वैदिकविश्वविद्यालये १६००  छात्राः सन्ति तेषु ५०० संस्कृतशिक्षार्थिनः सन्ति।

४१. आमेरिकादेशे संस्कृतभाषायाः प्रचाराय प्रसाराय च संस्कृताकादमी प्रतिष्ठिता अस्ति। संस्कृतभारत्याः आमेरिकिशाखाः प्रदेशे प्रदेशे विस्तारिताः भवन्ति।

**संस्कृतविदुषामान्तर्जातिकसम्मानाः**

गीताबोधकाय पं. पाण्डुरङ्गशास्त्री आठवळेमहोदयाय म्याग्शैसे प्रशस्तिः दत्तास्ति। विद्वन्मणये केशवचन्द्रदाशमहोदयाय संस्कृतकवये 1995 वर्षे आन्तराष्ट्रिय-कविसम्मानः दत्तः आसीत्।

४४. आसुलाल सञ्चैतिवर्येण सम्पादितस्य खण्डत्रयेण प्रकाशितस्य मेघदूतसङ्ग्रस्य कृतये 'गिन्निस्' पुस्तकेन सः प्रमाणितः।

४५. दक्षिणाफ्रिकादेशे गान्धिवर्येण प्रदर्शितस्य प्रचाराय प्रो.माइकेलहोलिवेलवर्य्येण एकं संस्कृतसङ्गीतरूपकं सज्जीक्रियमाणम् अस्ति। पप् गायिकायाः मैडीनायाः इण्टरनैट् माध्यमेन संस्कृतशिक्षणं-ध्वनिमुद्रिकाप्रकाशनञ्चेति वृत्तं समाचारपत्रे प्रकाशितमभवत्।

४६. 1960तमेवर्षे लेनिनग्राड्नगरे डॉ. राजेन्द्रप्रसादाय तत्रत्वेन सर्वकारेण संस्कृतभाषया रचितं मानपत्रं प्रदत्तमासीत्।

४७. 1947तमे वर्षे सम्मानात्मक-डीलिट-इत्युपाधिप्राप्तये, विश्वविद्यालयाय प्रतिभाषणं संस्कृतेन प्रदत्तमासीत् रवीन्द्रनाथठाकुरेण।

४८. सम्प्रति विश्वसंस्कृतप्रतिष्ठानेन पिकिं विश्वविद्यालयाय संस्कृतविषयमधिकृत्य आङ्ग्लभाषया पत्रं दत्तमासीत्। पिकिं विश्वविद्यालयेन प्रतिष्ठानं विज्ञापितं यत् वयम् आङ्ग्लभाषां न जानीमः, कृपया संस्कृतभाषया पत्रालापं कुर्वन्तु इति।

प्रमाणैरेभिः सुसिद्धं भवति यत् संस्कृतमासीद् जीवद्भाषा, अस्ति जीवद्भाषा, स्थास्यति च  जीवद्भाषा यावत् मानवसभ्यतायाः स्थितिम्। संस्कृतस्य जीवद्भाषात्वं त्रिकालसिद्धमस्ति, मादृशानामल्पबुद्धीनामयं सिद्धान्तः समीचीनो न वेति विचारयन्तु विश्वस्य विभिन्नप्रान्तस्य विद्वन्मूर्द्धन्याः, विचारचतुराः तत्र भवन्तो भवन्तः। इत्यलमतिविस्तारेण।

जयतु संस्कृतम्, जयतु भारतम्

ओं शान्तिः, शान्तिः, शान्तिः

## सन्दर्भग्रन्थाः


१. दृक् पत्रिका – पृ. १३३, दयानन्द भार्गव, नवोन्मेषः

२. लोकभाषा हि संस्कृतम्, प्रकाशिका-लोकभाषा-प्रचार-समितिः, पुरी सम्पादना - डॉ. सदानन्द दीक्षितः, पृ. १-५

३.जाह्नवी संस्कृतपत्रिका, 1996, पृ.२

४. सम्भाषणसन्देशः फरवरी -2001 पृ- ३१

५. सम्भाषणसन्देशः सितम्बरः - 96 पृ- १६-१७

६. सम्भाषणसन्देशः

७. सम्भाषणसन्देशः मई - 98 पृ- ७

८. सम्भाषणसन्देशः सितम्बरः - 2000 पृ- २५

९. सम्भाषणसन्देशः अगस्तः -2000 पृ-२८

१०.सङ्क्रमणम्, चमूकृष्णशास्त्री - प्रकाशिका- संस्कृतभारती, पृ.१- २४

११.सङ्क्रमणम्, चमूकृष्णशास्त्री - प्रकाशिका- संस्कृतभारती, पृ-३०,पृ-६७
१२.अमृतभाषा - सम्पादकः डॉ. कुमारचन्द्रमिश्रः मई - 98 -प्रथमपृष्ठे
सम्भाषणसन्देशः - सङ्क्रमणम् - पृ-२१,६४
१३. सम्भाषणसन्देशः - नवम्बरः- 95 -पृ-२9
१४. सम्भाषणसन्देशः - दिसम्बरः - 97- पृ - ३२
१५. सम्भाषणसन्देशः - मई -95- पृ -२७
१६. लोकभाषासुश्रीः, जनवरी - 97 - प्रथमपृष्ठे
१७. लोकभाषासुश्रीः,- अप्रैलः -98 - अन्तिमे आवरणे,
१८. सम्भाषण न्देशः, अक्टूबरः - 2000 - पृ. २५
१९. लोकभाषा सुश्रीः -पृ -नवम्बरः -2000 -पृष्ठावरणे
वन्दे संस्कृतम् - एस्. एस्. भट्टाचार्यः - पृ - ५9
२०. सङ्क्रमणम् - पृ - २४, संस्कृतकिछुवितर्क -डॉ. डि.मुखार्जी-पृ - ६-७
२१. सङ्क्रमणम् - पृ - २४,
२२. सम्भाषणसन्देशः – दिसम्बरः,95- पृ -प्रथमावरणस्य अन्तः भागे
२३. सम्भाषणसन्देशः - फरवरी - 99 - पृ - ५
२४. तत्रैव, 2000
२५. सम्भाषणसन्देशः - अप्रैलः - 96 - पृ- ६
२६. सम्भाषणसन्देशः - नवम्बरः - 97 - पृ - १३
२७. सम्भाषणसन्देशः - अप्रैरलः - 2001 -पृ - ४
२८. सम्भाषणसन्देशः - अप्रैलः - 95 - पृ - २४
२९. सम्भाषणसन्देशः - नवम्बरः - 98 - पृ - ३१
३०. सम्भाषणसन्देशः - फरवरी - 99 - पृ - ५
३१. सङ्क्रमणम्, चमू कृष्णशास्त्री - प्रकाशिका- संस्कृतभारती, पृ- १9
३२. सङ्क्रमणम्, चमू कृष्णशास्त्री - प्रकाशिका- संस्कृतभारती, पृ- १9
३३. सम्भाषणसन्देशः सितम्बरः - 97 - पृ -२७
३४. सम्भाषणसन्देशः - मार्चः - 97 - पृ - ७

३५. सम्भाषणसन्देशः - सितम्बरः - 97 - पृ -२७

३६. सम्भाषणसन्देशः - फरवरी - 97 - पृ - २9

३७. सम्भाषणसन्देशः - 95

३८. सङ्क्रमणम्, पृ - १9

३९. लोकभाषा हि संस्कृतम् -

४०. सम्भाषणसन्देशः - 95 मई

४१. सम्भाषणसन्देशः - सितम्बरः - 2000 - पृ- ६

४२. सं - सं - अक्टूबरः - 96 - पृ-२9

४३. सं - सं - जनवरी - 95

४४. सं - सं - दिसम्बरः - 2000 - पृ-२८

४५. सं - सं - नवम्बरः - 94 - पृ - ३१

४६. जनशिक्षा ओ संस्कृत - पृ- ६२

४७. जनशिक्षा ओ संस्कृत - पृ- ५9

४८. वन्दे संस्कृतम् – ५६



# संस्कृतवाङ्मये प्रकटिता भारतीयसमाजसंस्कृतिः

समित्युपसर्गोपसृष्टात् कृधातोः सुडागमे क्तिन् प्रत्यये विहिते सति संस्कृतिशब्दो निष्पन्नो भवति। सम्यक्-चेष्टानामागारः संस्कृतिरस्ति। आचार एव संस्कृतेर्मूलम्। यया क्रियया स्थूलपदार्थात् सूक्ष्मतत्त्वमधिगम्यते सैव संस्कृतिः। शिक्षादीक्षापरम्पराप्रथाजीवन-पद्धतयो याभिर्मानवानां जीवनं समुन्नतं भवति ताः सर्वाः संस्कृतिपदवाच्याः। यद्यपि संस्कृतेः क्षेत्रं सार्वकालिकञ्च वर्तते तथापि देशं जातिं कालं वाऽधारीकृत्य संस्कृतेः विभाजनं क्रियते। अतएव भारतीयसंस्कृतिः, मोगलसंस्कृतिः, चिनीसंस्कृतिः, पाश्चात्यसंस्कृतिः इत्यादयः प्रयोगा विधीयन्ते। विभाजनेऽस्मिन् इयमेव दृष्टिरस्ति यत् कस्यापि देशस्य कस्या अपि जातेः, कस्यापि वा कालस्य समुन्नयने संस्कृतेः किं योगदानं विद्यते। संस्कृतेर्विकास आध्यात्मिकसंस्कृतेः सम्बन्धः, आन्तरिकजगतः आधिभौतिकसंस्कृतेश्च सम्बन्धः बाह्यजगतो वर्तते। भारतीयसंस्कृतेः व्यापकतायाः ख्यातेश्च कारणम् इयं संस्कृताश्रिता वर्तते। संस्कृतभाषैवास्या वाहिका वर्तते। भारतीयसंस्कृतेः सूतिकागृहं संस्कृतवाङ्मयमेव। संस्कृतवाङ्मयमेव संस्कृतेरस्या आधारशिला इत्युच्यते। वेदाः भारतीयसंस्कृतेर्मूलम्। उपनिषदां तर्कप्रधानां संस्कृतिं, दर्शनानां विचारप्रधानां संस्कृतिं, पुराणानां धर्मप्रधानां संस्कृतिं, महाकाव्यानामादर्शप्रधानां संस्कृतिं, जैनधर्मस्य आचारप्रधानां संस्कृतिं, बौद्धधर्मस्य च समन्वयप्रधानां संस्कृतिं, चार्वाकादीनां भोगप्रधानां संस्कृतिं वा ज्ञातुं को वा जनः समर्थः संस्कृतशिक्षणेन विना। अतो भारतीयसंस्कृतिं जिज्ञासमानानां कृते संस्कृतशिक्षणस्यानिवार्यता स्वयंसिद्धैव, नात्र किमपि प्रमाणान्तरमपेक्ष्यते, यत एतद्विषये निबद्धाः सर्वेऽपि ग्रन्थाः

संस्कृतभाषायामेव वर्तन्ते। सेयं संस्कृताश्रिता भारतीयसंस्कृतिः राष्ट्रस्यास्योन्नयने संस्कृतेः बोधने पोषणे वा कथं सहायिका भवेत् एतत्सर्वं मदीये प्रबन्धे नातिविस्तरं सप्रमाणं वक्तुं प्रयते। प्रबन्धेऽस्मिन् सामान्यतः त एव विन्दवश्चर्चितास्स्युर्यैन भारतीयसम्भतायाः पोषणे रक्षणे च संस्कृतस्य भूमिका स्पष्टा भवेत्। भारतीया संस्कृतिः संस्कृतभाषा च अन्योऽन्यं विना कथं प्राणहीन एव जायेते एतदपि चर्चाविषयः करिष्यतेऽत्र।

प्रबन्धादावेवोल्लिख्यते यद्यत्वे न केवलं भारतेऽपित्वखिलसंसारे संस्कृतेः स्थानं सभ्यतया गृह्यते। सभ्यता संस्कृतिश्चेत्येते परस्परमभिन्ने इति विदां वादः। वेदाः भारतीयसंस्कृतेर्मूलमिति पूर्वमस्माभिरुक्तम्- वेदोऽखिलो धर्ममूलमित्यभिमतं धर्मशास्त्रकाराणाम् अस्मदृषीणामपि। भारतीयसंस्कृतेरभ्युत्थाने उपनिषदामवदानं महत्त्वपूर्णं वर्तते। वेदेषु उपनिषत्सु चोल्लिखितानां मन्त्राणां ज्ञानमत्यावश्यकं भारतीयसंस्कृतेस्तत्त्वबोधाय। 'उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत', 'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमय', 'आनो भद्राः क्रतवो यन्तु विश्वतः', 'मातृदेवो भव', 'पितृदेवो भव', 'आचार्यदेवो भव', 'अतिथिदेवो भव', 'योऽनुचानः स नो महान्', 'ईशावास्यमिदं सर्वम्...' इत्यादीनि वाक्यानि भारतीयसंस्कृतेर्दिशानिर्देशकानि सन्ति। असङ्ख्या एतादृशाः मन्त्राः सन्ति केवलं दिङ्मात्रमत्रोपदर्शितम्। अत्रत्या संस्कृतिः ज्ञानाधिगमस्वरूपा मोक्षाधिगमस्वरूपा च। ज्ञानान्मुक्तिर्भवति। पुरुषार्थचतुष्टये मोक्ष एव परमपुरुषार्थः। गुरुशुश्रूषा, विद्यावृद्धानां सेवा, धर्मवृद्धानां सम्मानना, शास्त्रनिष्ठा, देवताऽर्चना, सदाचारपरिपालनं, विश्वकल्याणचिन्ता, प्राणिषु सद्भावना, इत्येत्सर्वं भारतीयसंस्कृतेर्वैशिष्ट्यम्। भारतीयसंस्कृतौ आचाराणां प्राधान्यं सुस्पष्टमेव। उच्यते- आचारविचाराणां समन्वय एव संस्कृतिः। अतः संस्कृतेः तत्त्वज्ञानाय आचाराणाम् अनुशीलनं

नितान्तमपेक्षितम् एव। संस्कृतेरस्माकं गहनतागम्भीरताविशालता-प्राचीनतानाञ्च परिचयो दर्शनशास्त्रस्यावगाहनेन विना न शक्यः। आस्तिकनास्तिकदर्शनानां तत्त्वचिन्तनं विना भारतीयसंस्कृतेः स्वरूपज्ञानं न शक्यम्। आध्यात्मिकसाधनायाः यः प्रभावो भारतीयसंस्कृतौ परिलक्षितो भवति तस्य परिज्ञानं शास्त्राध्ययनादृते असम्पूर्णं स्यात्। धर्मप्रधानेयं भारतीया संस्कृतिः। सर्वाण्यपि धर्मशास्त्राणि, पुराणानि, उपपुराणानि, इतिहासाः, काव्यानि, नाटकानि, विज्ञानानि संस्कृतभाषानिबद्धानि। रामायणे महाभारते च चित्रितं नायकानां खलनायकानामन्येषाञ्च चरित्रं भारतीयसंस्कृतेः स्वरूपबोधे नितान्तं सहायकं सिद्ध्यति। पुराणेषु उपपुराणेषु च पात्राणां चरित्रचित्रेण प्रस्तुतानि नैतिकमूल्यानि भारतीयसंस्कृतेर्बीजम्। संस्कृतानभिज्ञाः संस्कृतेस्तस्यास्तत्त्वं कथं ज्ञास्यन्ति। अतः भारतीयसंस्कृतेर्ज्ञानाय संस्कृतस्य अनिवार्यता अपेक्षितैव। भारतस्य प्रथमराष्ट्रपतिना ड.राजेन्द्रप्रसादमहोदयेन प्रसङ्गेऽस्मिन् दृढतयोक्तम्- "Sanskrit is the language of Indian culture and inspiration, the language which all her part greatness, her rich thought and her spiritual inspiration are enshrined … Sanskrit has not only been the treasure house of our past knowledge and achievements in the realm of thought and art, but it has also been the principal vehicle of our nation's inspirations and cultural traditions, besides being the source and inspirations of Indians modern languages."

अखण्डभारतस्य सनातनसंस्कृतेश्चिरन्तनी धात्रीयं संस्कृतभाषा। अस्माकं प्राचीनसंस्कृतेः सततं वाहिकायाः अस्याः संस्कृतभाषाया विषये फ्रेञ्च-मनीषिणा डा.लुईरेणोवर्येणोक्तमत्र स्मर्तव्यम्-

"There is not a living culture without a living tradition. If India is beloved and cherished among the elite of the West, it is on account of her traditional culture and this culture is embedded above all in the treasure of Sanskrit. Sanskrit and India are inseparably connected inspite of all the transitory harangues of the politicians."[2]

प्रसङ्गेऽस्मिन् भारतस्य सर्वोच्चन्यायालयस्य ऐतिहासिकनिर्णयोऽत्रोल्लेख्यः- "We the people of India are concerned, they have always held in high eaten the cultural heritage of this ancient land. And to fortell our views, learning of Sanskrit is undoubtedly necessary for protection of this heritage. The stream of our culture would get dried if we were to discourage the study of Sanskrit… "[3]

अत्र कवीन्द्रस्य रवीन्द्रनाथस्य मतं विशेषेण स्मरणीयम्- "भारतवर्षेर चिरकालेर ये चित्त ताहार आश्रय संस्कृतभाषाय। एइ भाषार तीर्थ पथ दिये आमरा देशेर चिन्मयप्रकृतिर स्पर्श पाव, ताके अन्तरे ग्रहण करव, शिक्षार एइ लक्ष्य आमार मने दृढ छिल। इंरेजी भाषार भितर दिये नाना ज्ञातव्य विषय आमरा जानते पारि, सेगुलि अत्यन्त प्रयोजनीय। किन्तु, संस्कृत भाषाय एकटि आनन्द आछे, से वर्धित करे आमादेर मनेर आकाशके, तार मध्ये आछे एकटि गभीर वाणी, विश्वप्रकृतिर मतोइ से आमादेर शान्ति देय एवं चित्तके मर्यादा दिये थाके।"[4]

"ये संस्कृत जाने ना से भारतीय संस्कृतिर विषय जानिते पारे ना। आमि यदि संस्कृत ना जानिताम ताहा हइले वांला भाषार एमन

कविता लिखिते पारिताम ना। सकल भारतवासीरइ संस्कृत शिक्षा करा दरकार।"[5]

युगनायकेन स्वामिना विवेकानन्दनापि सुष्ठु भणितम्- "संस्कृत शिक्षाइ भारतेर प्राचीन ऐतिह्यके जातिर मध्ये अङ्गीभूत करिया लइवार एकटि प्रधान उपाय।" [6]

अत्रेदं प्रसङ्गिकं भवेत् राष्ट्रजनकस्य महात्मगान्धिवर्यस्य अभिमतम्- "Every nationalist should study it (Sanskrit)." [7] इति। अन्यच्च-

"विना संस्कृत पढ कोइ अपने को पूर्ण भारतीय और-विद्वान् नहीं वना सकता।"

भारतीयास्तु संस्कृतं विना असंस्कृता एव। अपि च स एव गन्धिमहोदयः 1912 तमे वर्षे सितम्बरपञ्चमदिनाङ्के स्वस्य पुत्राय पत्रेण फ्रेञ्चभाषाशिक्षणस्य स्थाने संस्कृतं पठितुं सूचनां दत्तवान् आसीत्। सः हरिलालगान्धेः कृते लिखितवान् आसीत् यत्- संस्कृतस्य ज्ञानेन सर्वासां भारतीयभाषाणां पठनस्य द्वारमुद्घाटितं भवति। तद्(द्वारम्) भवान् स्वयमेव स्वहस्ताभ्यां पिहितवान् अस्ति। भवान् पुनरपि फ्रेञ्चभाषायाः चर्चाम् आरब्धवान् अस्ति। अतः एतावद् लिखन् अस्मि। भवान् इदानीमपि चिन्तनं कृत्वा एकं वर्षं यावत् परीक्षालेखनस्य विचारं परित्यजतु, तथा च संस्कृतं पठतु। किञ्च तत्सम्बन्धे स्वस्य अभ्यासाय(संस्कृताभ्यासाय) सप्तरूप्यकाणां स्थाने अष्टरूप्यकाणां व्ययं करोति चेत् अपि मम प्रसन्नता भवेत्।[9]

संस्कृतस्य भारतीयसभ्यतायां कीदृशं स्थानं वर्तते, सन्दर्भेऽस्मिन् स्वतन्त्रभारतस्य प्रथमप्रधानमन्त्रिणः जवाहरलालनेहरुमहोदयस्य वक्तव्यमुपस्थाप्यते- " It I was asked what is the greatest treasure which India possesses and what is her finest heritage, I would answer

unhesitatingly it is the Sanskrit language and all that it contains. This is a magnificent inheritance, and so long as this endure and influences the life of our people, so long the basic genius of India will continue. The great Sanskrit language that found us together from Himalayas to Cape Commarine."[10]

प्रसङ्गेऽस्मिन् सर्वोच्चन्यायालयस्य पूर्वतन-मुख्यन्यायाधीशस्य वेङ्कटरामस्य महोदयस्य वचनमुल्लेखयोग्यम्। सः अवदत्- "There is no sense of Indianness without Sanskrit. The eighth schedule of the Indian constitution recognises Sanskrit as one of its languages. Indianness can not be imagined without Sanskrit. Everyone should therefore, make himself acquainted with Sanskrit."[11]

संस्कृतस्यावदानविषये गुरुत्वसम्पर्के च यगिरा स्य ऋषेः श्रीअरविन्दस्य मतमेवमस्ति- "It is of the utmost value to action, a human groupsoul, to preserve its language and to make of it a strong and living cultural instrument. A nation, race or people which loses its language, can not live its whole life or its real life." [12]

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥ वि.पु.2/2/1॥

हिमवतः सेतुपर्यन्तमिति। भारतस्य उपर्युक्तपरिधिः

विष्णुपुराणप्रतिपादित एव शाश्वतं समादरणीयो वर्तते। मार्कण्डेयपुराणे तदेव समर्थितम्-

दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः।
हिमावानुत्तरेणास्य कार्मुकस्य यथा गुणः॥

तदेतद् भारतं वर्षम्। अस्य देशस्य नामकरणं संस्कृतशब्देनैव जातं 'भारतम्' इति। संस्कृतेन सदैव भारतस्य तादात्म्यं चिन्तनीयम्। कायाप्राणैरिव सम्बन्धः भारतेन सह संस्कृतस्य। आधुनिक-भारतस्य आधारशिला संस्कृतभाषैव। तस्यामेव भित्तिभूमौ भारतसौधः सुसंस्थापितो वर्तते इति निस्सङ्कोचं वक्तुं शक्नुयामः। सुप्राचीनकालादेतावत्पर्यन्तं प्रवर्तमानेन संस्कृतवाङ्मयेनैव भारतराष्ट्रस्योद्देशाः विविधाश्च पक्षाः विविधप्रकारैः वर्णिताः वर्तन्ते। भारतस्य राष्ट्रियचेतनायाः, राष्ट्रियैकतायाः राष्ट्रियादर्शस्य, सामाजिकसमरसतायाः, लोककल्याणभावनायाः कर्तव्यपरायणतायाः विश्वबन्धुत्वभावनायाः, आध्यत्मिकचेतनायाश्च मूलं स्रोतः संस्कृतवाङ्मयमेव। तद्यथा- "वयं राष्ट्रे जागृयामः पुरोहिताः" "यतेमहि स्वराज्ये" "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी", "गङ्गे च यमुने चैव गोदावरि सरस्वति नर्मदे...", कुरुक्षेत्रे- गया- गङ्गा- प्रभास- पुष्कराणि च, अयोध्या मथुरा माया काशी काञ्ची अवन्तिका... इति। सत्यं वद, धर्मं चर, अहिंसा परमो धर्मः, पण्डिताः समदर्शिनः, समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः, संगच्छध्वं संवदध्वम्...(ऋग्. 20/181/2), मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे(यजु. 36/18), सर्वा आशा मम मित्राणि भवन्तु(अथ.18/15/6), समानी व आकुतिः समाना हृदयानि वः (ऋ.10/81/8), समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्। समानं मन्त्रमभिमन्त्रयेवः समानेन वो हविषा जुहोमि(ऋग्..10/181/3), समानी प्रपा सह वोऽन्नभागः (अथ.3.30.6), केवलाघो भवति केवलादी (ऋग्.10.117.),

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।

तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्॥ (ईशो.1)

इत्यादिषु वाक्येषु भारतस्यादर्शजातं सुष्ठु प्रतिफलितं भवति। अत्र जीवनस्य कस्मिन्नपि क्षेत्रे परार्दनं परशोषणं परपीडनं वा न भवेत्। स्वाधीनवृत्तौ नास्ति कोऽपि उत्तमाधमः। एषु उदात्तविचारेषु वैषम्यवार्ता एव नोदेति। ईदृशी साम्यवादस्य भावनाऽन्यत्राकल्पनीया। पानभोजनेष्वपि संविभज्यैवोपभोगव्यवस्थास्माकं संस्कृताश्रितायां भारतीयसंस्कृतौ विद्यते।

समस्तेऽपि संस्कृतसाहित्ये देशप्रेम्णः सरिद्धाराः प्रवहन्ति। भूम्यै मातृपदवी तदनुकूल आदरश्च दत्तोऽस्ति। उक्तञ्च- तन्माता पृथिवी तत्पिता द्यौः(ऋ.2/89/4), नाहं मातरं पृथिवीं हिंसिषं मा मां माता पृथिवी हिंसीद् (तै.सं-2/8/15), सा नो भूमिर्विसृजतां माता पुत्राय मे पयः(अथर्व-12/2/20), मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल... इत्यादीनि शतशो वचनानि अत्र प्रमाणम्। राष्ट्रसेवायै तद्रक्षायै च जनानां जागरूकताऽत्र परमावश्यकरूपेण परमनिष्ठया च प्रतिपदं प्रातिपादितं वर्तते। वैदिकसाहित्ये राष्ट्रस्तुतिः राष्ट्रस्वरूपस्य तत्समृद्धेश्च परिकल्पना संस्कृतविदुषामृषीणां राष्ट्रप्रेम्णा उदात्तस्वरूपमभिव्यनक्ति। तीर्थानां नदीनां पर्वतानां तरूणाम् औषधीनां पूज्यता देवस्वरूपतादिप्रतिपादनेन समस्तप्रपञ्चं प्रति श्रद्धाऽभिव्यज्यते, तेन च विश्वं प्रत्येव प्रेमभाव उद्भवति। वस्तुतः संस्कृतसाहित्यकाराणां विचारधारा देशकालजात्यादिभेदैरपरिच्छिन्ना सती सम्पूर्णमेव विश्वमात्मसात् करोति। अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कटुम्बकम्॥ शृण्वन्तु विश्वे अमृतस्य पुत्राः, माता मे पार्वतीदेवी पिता देवो महेश्वरः। बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयमेवमादीनि विश्वप्रेमसाक्षीणि वाक्यशतान्यत्र विकीर्णानि सन्ति। परोपकारभावना संस्कृतवाङ्मये दृढमूला वर्तते॥ अधीतसंस्कृतानामाद्यो

गुणः स्यात् परोपकारः। परहिताय जीवनविसर्जनपराणामुदाहरणैः संस्कृतवाङ्मयं परिपूर्णमस्ति। परोपकाराय सतां विभूतयः, परोपकारः पुण्याय पापाय परपीडनम्, विभाति कायः करुणापराणां परोपकारैर्नतु चन्दनेन, सन्तः स्वयं परहितेषु कृताभियोगाः, एवमादिभिरगण्यसूक्तिभिः प्राप्तप्रेरणाः नैके स्वजीवनं विश्वकल्याणाय समर्पयन्ति। संस्कृतवाङ्मयमिदमतिमधुरं कारुण्यं प्रवाहयति। सर्वत्र दयाभावनाहेतोः हिंसां पापमपराधं निष्ठुरतां चोदीरयति। वसुधां कुटुम्बमिति मत्वा सर्वथा स्नेहधारां प्रवाहयति।

आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः।
मृगोष्ट्रखरनर्काखुसरीसृप्खगमक्षिकाः।
आत्मनः पुत्रवत्पश्येत् तैरेषामन्तरं कियत्॥
हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः।

गृहानहिंसन्नातिष्ठेत्, इत्यादिभिर्हृदयङ्गमैरुपदेशैः सर्वप्राणिनां चेतसि स्नेहमयीमहिंसावृत्तिमुत्पादयति। बौद्धजैनादिसाहित्यस्य तु अहिंसाभावो मूलाधार इवास्ति। सर्वकल्याणकामनामयो ह्ययं भावः संस्कृतवाङ्मये प्रायशः प्रतिबिम्बितो भवति। न्यायप्रियता सर्वजनाधिकाररक्षा च महाभारत-रामायण-पुराणादिषु वर्णितानां चरित्राणां पठनेन स्फुटीभवति।

सदाचारस्य सूक्ष्मविवेचनं मानवजीवनोन्नतिहेतौ तस्यानिवार्यता अविकलं तस्याचरणीयता च यथा संस्कृतसाहित्ये लभ्यते भारते शिक्षापरम्परायां चाद्रियते क्वान्यत्र तथा प्राप्यते। ईदृशी सरलजीवनपद्धतिरन्यत्र नूनं दुर्लभा। आदिकालादेव क्रान्तद्रष्टा संस्कृतकविः समाजव्यवस्थां प्रति चेतनावान्, मानवीयभावनाः प्रति संवेदनावान् आसीत्। वाङ्मयेऽस्मिन् प्राणिमात्रोद्धारचिन्ता सततं दृश्यते। तत्रैकमेव साध्यम्- न मानुषाच्छ्रेष्ठतरं हि किञ्चित्।

कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्,

परोपकाराय सतां विभूतयः,

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः,

शिवमस्तु सर्वजगतां परहितनिरताः भवन्तु भूतगणाः।

दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः।

सर्वेषां मङ्गलं भूयात्, इत्यादिभिर्वाक्यैः सामाजिकचेतना भृशं मुखरीभूता। जीवनस्य मूलभावनामादाय व्यष्टिव्यतिरिक्तं समष्टेः जीवनस्यैव व्याख्या प्रस्फुटिता जाता। समग्रसमाजस्य चेतना संस्कृतकवीनामन्तःकरणे स्पन्दिता जाता। संस्कृतकविताविणायां मानवसमाजस्य जीवनसङ्गीतस्वराश्च गुञ्जिताः। सामाजिकवैषम्यानां दूरीकरणे संस्कृतलोक एव शरणम्। अद्यत्वे मानवस्य मानवं प्रति विद्वेषवैमनस्यादिकं प्रवर्धमानं लक्ष्यते। एतस्याधारः कुत्रचित् साम्प्रदायिकी भावना, कुत्र वा जात्याश्रिता उच्चता–नीचता, क्वचिद्वा धनलोलुपता आर्थिकवैषम्यं वा अस्ति। संस्कृतसाहित्यमेतादृशं विद्वेषभावं गर्हयति। संस्कृतवाङ्मयमिदं स्पष्टयति यत् जातिगताधारेण न कोऽप्युच्चो नाधमो। महाकविः अश्वघोषः जात्याधारितभेदभावस्य नीचोच्चतायांश्च निरर्थकतां सारहीनताञ्च वज्रसूच्युपनिषदि बहुभिः शास्त्रीयैः प्रमाणैः प्रत्यपादयत्। तेन पौनःपुन्येन लिखितम्, तस्माज्जातिरकारणम्- इति। उक्तञ्च महाभारते-

जातिरत्र महासर्पो मनुष्यत्वे महामते॥ महा. वन. 280/32॥

पुनस्तत्रैवोक्तम्-

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।

ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥ म.शा.प.282/90।

पुनरप्युक्तम्- एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर।

कर्मक्रिया विशेषेण चातुर्वर्णं प्रतिष्ठितम्।

गीतायाम् उक्तम्- चातुर्वर्ण्यं मया सृष्टं गुणकर्मविशागशः॥

वेदेऽपि कथितम्-

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्।
श्रुतं चेदस्मिन् स पिता स पितामहः॥ (कृ.यजु.30/2)

अतोऽस्मद्देशे जायमानायाः जातिगत-भावनायाः निवारणं संस्कृतभाषायाः शिक्षणेन सम्भवति। स्वामी विवेकानन्दः कथयति-

"The only safety, I tell you men who belong to the lower caste the only way to raise your condition is to study Sanskrit."

अद्यत्वे विभिन्नेषु राष्ट्रेषु नारीणां पुरुषैः समं समानाधिकारः इति अतीव चर्च्चितविषयोऽस्ति। भारतेऽपि महिला-आयोगस्य स्थापना, ग्रामसभासु, राज्यसभायां, लोकसभायाम्, एवमेव समाजस्य सर्वेषु क्षेत्रेषु महिलानां कृते आरक्षणयाचना क्रियते। तासामुन्नत्यर्थं बहवः प्रकल्पाः सर्वकारेण स्वीकृताः दृश्यन्ते। परन्तु अस्माकं संस्कृतौ नारीणां स्थानं पुरुषाणामपेक्षया समुच्चं वर्तते। संस्कृतवाङ्मयस्य किञ्चित् परिशीलनेन नारीणां समाजे कीदृशमवस्थानमासीदिति स्पष्टं प्रमाणितं भवति-

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥ (म.सं-3/56)।

महाभारतेऽपि उक्तम्-

स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवताः। (महा.अनु, 46/56)

महाभारते अन्यत्राप्युक्तं यत्- स्त्रियः एव गृहस्य श्रियः भवन्ति-

स्त्रियः श्रियो गृहस्योक्ता। (महा.उद्यो.38/22)।

तदानीन्तनसमाजो गृहिणीरहितं गृहं वनमिति मन्यते स्म

न गृहं गृहमित्याहु गृहिणी गृहमुच्यते।
गृहं तु गृहिणीहीनमरण्यसदृशं भवेत्॥ (महा.शा 244/6)

नलचम्पूकाव्ये दृश्यते यत् कुलवध्वः लोकस्य पूज्याः भवन्ति स्म, उक्तञ्च – कुलवधूनां सेवको लोक एषः। (नलचम्पू-6/54)। माता शिक्षिता चेत् सर्वोऽपि परिवारः शिक्षितः स्यादिति राष्ट्रियसाक्षरतायोगो

वदति। परं सहस्रवर्षभ्यः पूर्वमेव सन्दर्भेऽस्मिन् उक्तमासीत्- नास्ति मातृसमो गुरुः (महा. अनु.(206/65) इति। साम्प्रतिककाले प्रगतिवादिनः नारीशिक्षाविषये मुखराः सन्ति। परन्तु बहुपूर्वमेव ऋषिभिरुक्तं यत्- कन्याप्येवं पालनीया शिक्षणीया। सम्प्रति नैकेषु क्षेत्रेषु महिलाः पुरुषसमानाधिकारैः वञ्चिताः सन्तीति श्रूयते, परन्तु पुरेदृशी स्थितिस्तासां नासीत्। उक्तञ्च- स्त्रीपुमानित्यनास्थैषा वृत्तं हि मोहितं सताम्।(कुमारसम्भवे, 6/22)। महाकविना कालिदासेनान्यत्राप्युक्तं मालविकाग्निमित्रे यत्-

अतिगात्रं भासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः॥( 2/23)।

अन्यत्रापि महाकविरसौ नारीं पुरुषञ्च- वागार्थाविव सम्पृक्तौ- इति मन्यते। मनोर्वचनान्यप्यत्र स्मरणीयानि-

न लिङ्गं धर्मकारणम्। (मनु 6/66),
दाराः रक्ष्यतमाः सदा। (मनु. सं 8/359),
सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥(मनु-3/60)।
यदा भार्या च भर्ता च परस्परवशानुगौ।
तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्॥(मनु.3/62)।
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः।
स्त्रियश्च श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन॥(मनु. 9/26)।

आत्मा हि दाराः सर्वेषाम् – इति नारी पुरुषस्यात्माऽस्ति। भारतीयसंस्कृतौ नारीभ्यः प्रभूताधिकाराः दत्ताः सन्ति। दायनिरूपणे तासामधिकाराणां विवेचनमस्ति। वस्तुतः नारीपुरुषयोरद्वैतमेवात्र स्वीकृतम्। एवमेव नारी विविधरूपेण मान्या पूज्या चात्राऽसीत्।

गार्हस्थ्यजीवनं भारतीयसंस्कृतेः प्रधानं वैशिष्ट्यमस्ति। तत्र देव-ऋषि-पितृ-अतिथि-भूतादीनां पञ्चानां यज्ञानां सम्पादनं गृहस्थानां

कृतेऽनिवार्यमस्ति। एषु पञ्चसु महायज्ञेष्वेव भारतीयसंस्कृतेः प्राणाः निहिताः सन्ति। अनेकसहस्राब्दचिन्तितगहनप्रौढविचाराणाम् उदात्तभावानामनुभवैः परिपक्वाः सिद्धान्ताः संस्कृतभाषायां सन्ति निहिताः। यत्र भारतीयजीवनस्य किञ्च मानवमात्रस्य वास्तविकं लक्ष्यं सुनिर्दिष्टमस्ति। धर्मो हि संस्कृतसाहित्यस्य प्रायः सर्वास्वेव शाखासु विस्तृतो विषयोऽस्ति। आचारैः संस्कारैश्च सह धर्मस्य अव्यभिचारी सम्बन्धः। यदि वयं धर्मं संस्कृतेरभिन्नं तत्त्वं वदेम तदा नात्युक्तिः स्यात्। अयं धर्माचारो हि भारतीयजीवनस्य सर्वाण्येवाङ्गानि अभिव्याप्नोति। यत्र युद्धेऽपि, वधेऽपि, कामेऽपि च धर्मप्रवेशः स्यात्तत्र का कथा अन्येषां कर्मणाम्। अर्थकामयोर्नियामकत्वेनापि धर्मस्यानिवार्यः प्रवेशः स्वीक्रियते। किमधिकम्- यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः- इति परिभाषयता वैशेषिकविदुषा जीवनस्य सर्वमेव व्यापारजातं धर्मानुप्राणितमिति भणितम्। भारतीयसंस्कृतिप्रतिपादितो धर्मो द्विधा वर्तते सामान्यविशेषभेदाभ्याम्। तत्र सामान्यकक्ष्यायां सार्वभौमः सार्वजनीनश्च धर्मः ततः विशेषकक्ष्यायां तत्तत्समाजाचरणीयो धर्मो सङ्गृह्यते। तेन च धर्मस्योदारस्वरूपं देशकालजातिसम्प्रदायादिभिर्न परिच्छिद्यते अपि तु समस्तमानवतामेव स्पृशति। अद्यत्वे विभिन्नमतसम्प्रदायादयः धर्मभेदकल्पनया समाजसामरस्यं विघटयन्तो यत् सौहार्दं सौभ्रातृत्वं च नाशयन्ति। संस्कृतवाङ्मयाध्ययनेनैव सार्वभौमधर्मस्वरूपबोधेनैव तत् शिथिलयितुं शक्यते। उक्तञ्च-

धर्मो यो बाधते धर्मं न स धर्मः कुवर्त्म तत्।
अविरोधात्तु यो धर्मः स धर्मः सत्यमुच्यते॥

यद्धार्यतेऽङ्गीक्रियते येन च सर्वे धार्यन्ते ते सनातननियमाः धर्मपदेनाभिधीयन्ते इति सभ्यताधायकाः गुणाः धर्मपरिधावायान्ति।

धारणाद्धर्म इत्याहु धर्मो धारयते प्रजाः।
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः॥

नैतिकता धर्मश्च एकस्या एव मुद्रायाः पक्षद्वयम्। मनुरपि धर्मं कर्तव्यमेवामनुते। सत्यनिष्ठा एव धर्मः। नहि सत्यात्परो धर्मः, सर्वं सत्ये प्रतिष्ठितम्, लोकः सत्यमीश्वर इत्येव मन्यते। एवं कर्तव्यपालनेन, सदाचारेण, सत्यनिष्ठेन कर्मणा, शिष्टाचारेण, संस्कारैर्वा धर्मस्य प्रतिष्ठा। आचारणेनैव धर्मस्य सार्थकता इति मान्यता भारतीयसंस्कृतेः। उक्तञ्च- आचारः परमो धर्मः (मनु.-2/208) इति। ईदृशी धर्मस्य परिभाषा विश्वसंस्कृतौ अप्रतिमा। एवम्भूता धार्मिकी भावना तु संस्कृतस्य पर्यायमेव। आनृशंस्यं परो धर्मः। (महा.वन. 223/30)। अहिंसा परमो धर्मः। (महा.अनु. 226/38)। एतादृशो धर्मश्चेत् जनैः स्वीक्रियेत। तदा आतङ्कवादः, विच्छिन्नतावादः, अनुशासनहीनता, भ्रष्टाचारः, हिंसा स्वत एव जगतः विलोपं यास्यति। भारतवर्षोऽयं शान्तिसम्पन्नः सुखसमृद्धियुक्तश्च भविष्यति। अस्मत्संस्कृतौ धर्मस्य लक्षणं यथा कृतं तत् त्रैकालिकं सर्वलोकमान्यं विश्वजनोपयोगि च वर्तते। तच्च-

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रयनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥ (म.सं- 6/92)॥
वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्रोक्तं साक्षाद्धर्मस्य लक्षणम्॥

अर्थात् वेदेषु निगदितं, स्मृतिशास्त्रेषु भाष्यीकृतं, सद्भिराचरितं, स्वप्राणिमात्रस्य प्रीतिकरम्। एवं धर्मः सर्वेषां सामान्यधर्मः भवति। महाभारते धर्मविषये यत् कथितं तदपि अनुपममेव। तदेवमस्ति-

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानञ्च सतां धर्मः सनातनः॥ (महा.वन. 297/35)।

विश्वबन्धुत्वभावनया ओतप्रोतं संस्कृतवाङ्मयम्। कृण्वन्तं विश्वमेकनीडम्- इति। यत्र विश्वं भवत्येकनीडम् (वा.स. 32/8)।

विश्वानि देव सवितर्दुरितानि परासुव(ऋग्.10/7/120/)
यद्भद्रं तन्न आसुवः, द्यौर्वः पिता पृथिवी माता

सोमो भ्रातादितिः स्वसा॥ (ऋग्. 2.262.6)।

इत्थं भारतीया संस्कृतिरुदारा वर्तते, न तु सङ्कुचिता। एकं सद्विप्रा बहुधा वदन्ति। रूपं रूपं प्रातिरूपं विभाति।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुनः।

आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः॥ इत्यादिषु वाक्येषु भारतीयसंस्कृतेः सारो निहितोऽस्ति। संस्कृताश्रितसंस्कृत्यैव भारतदेशोऽयं विश्वस्याध्यात्मगुरुपदं प्राप्तुं शक्नुयात्।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः। इति मनुनोक्तम्। वैदिकर्षिरपि आह्वयति- कृण्वन्तो विश्वमार्यम्- इति। समाजस्य कल्याणं तदैव भवितुमर्हति यदा सर्वे मानवाः स्वकर्तव्यानि कुर्युः। यदा कस्मिंश्चित् यन्त्रे यदा सर्वेऽवयवा युगपत् स्वकार्याणि कुर्वन्ति तदा यन्त्रम् अभीष्टं कार्यं सम्पादयति। एकस्मिन्नपि विकलावयवे यन्त्रमपि कार्यं न कुर्यात्। एवं भारतराष्ट्रस्योन्नतयेऽपि सर्वैर्नागरिकैरवश्यं पालनीयाः केचन मौलिकाऽदर्शाः। महाजनानां मार्गोऽनुसर्तव्यः सर्वैर्देशवासिभिः। उक्तञ्च भारते- महाजनो येन गतः स पन्थाः, अन्यञ्च –

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।

स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते॥ (गीता)।

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्ये व्यवस्थिते – इत्यादीनि वाक्यानि कर्तव्याकर्तव्ये बोधयन्ति, उचितानुचितयोः भेदं प्रदर्श्य सन्मार्गे प्रेरयन्ति, शुभाशुभयोर्विवेचनं कारयित्वा शुभे कर्मणि प्रचोदयन्ति, सदसदो ज्ञानं कारयन्ति। संस्कृतशिक्षणेन विना सर्वमेतत् निरर्थकं स्यात्।

भारतीयसंस्कृतेरात्मा संस्कृतमेव। संस्कृतमाध्यमेनैव भारतीयसंस्कृतिरजराऽमराऽक्षुण्णा च स्थास्यति अन्यथा नैव। वर्तमानभारतस्य सर्वाः समस्याः दूरीकर्तुं संस्कृताश्रितेयं संस्कृतिः पूर्णतः

समर्था। तदर्थं संस्कृतमूलं सुदृढं कर्तव्यम्। मूलेन विना भारतवृक्षस्य शाखाः पत्राणि सरसानि भवितुं नार्हन्ति। अत एव संस्कृतिं सरसां विधातुं संस्कृतमनिवार्यत्वेनावलम्बनीयम्। अस्माकं भारतीयसभ्यतायार्मूलं संस्कृतवाङ्मये विद्यतेतराम्। संस्कृतभाषायाः सम्बन्धविच्छेदनेन भारतीया संस्कृतिर्नूनं म्लानतां ग्लानतां च यास्यति। अत आधुनिकभारतस्य कल्याणाय वर्तमानभारतस्य, जीवत्समस्यानां समाधानार्थं राष्ट्रियैकतासम्पादनार्थं, भाषासमस्यानिवारणार्थं, सामाजिकन्यायप्रतिष्ठार्थं, मतीयविद्वेषदूरीकरणार्थं, जातीयतावादस्योद्बोधनार्थं, समरसतासंस्थापनार्थञ्च संस्कृभाषाचर्चा आत्यावश्यका। अत्राधुनिकभारतस्य राष्ट्रनायकानामुक्तयः स्मरणीयाः-

"Without the study of Sanskrit one cannot became a true Indian and a true learned man."

M. K. Gandhi.

"Samskrit is not a language of any particular sect or creed. It is the language of every Indian."

Fakruddin Ali Ahmed.

"Samskrit literature is national in one sense, but its purpose her been universal."

Dr. S. Radhakrishnan.

"The very sound of Sanskrit words gives a prestige and a power and a strength to the race."

"Sanskrit and prestige go together in India. As soon as you have that, none dares say anything against you. That is the one secret, take that up."

"Why do you not become Sanskrit scholars? Why do you not spend millions to bring Sanskrit

education to all castes of india? That is the question. The moment you do these things, you are equal to the Brahmin"- Swami Vivekananda.

"Without the learning of Sanskrit it is not possible to decipher the Indian philosophy on which our culture and heritage are based…" Supreme Court of India 4.10.94.

"Sanskrit should be suggested that Sanskrit should be declared as the national language"

C. V. Raman.

"The official language of the Indian union shall be Sanskrit"- Dr. V. R. Ambedkar.

उपसंहारे वयं वदेम यत् राष्ट्रस्यास्य पारिवारिक-सामाजिक-राजनैतिक-आध्यात्मिक-सैद्धान्तिक्त-व्यावहारिकादिषु सर्वेषु क्षेत्रेषु भारतीयान् सन्मार्गं दर्शयितुं सुसंस्कृतञ्च कर्तुं संस्कृतशिक्षणम् अपरिहार्यमेव।

ग्रामे ग्रामे नगरे नगरे विलसतु संस्कृतवाणी।
सदने सदने प्रतिजनवदने जयतु चिरकल्याणी॥
संस्कृतिस्संस्कृतञ्च द्वे भारतस्याक्षिणी इमे।
तयोरुपेक्षया नूनमन्धकारो भविष्यति॥
शिवमस्तु सर्वजगतां परहितनिरताः भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः॥
जयतु संस्कृतम्, जयतु भारतम्॥

**सान्दर्भिकग्रन्थसूची**

1. जनशिक्षाय संस्कृत, ड.ध्यानेशनारायणचक्रवर्ती, प्रका. प्रोग्रेसिभवुकफोराम, कलिकाता, पृ.सं-21

2. …that is Sanskrit, Dr. sampadananda mishra, sri aurobindo society,pandichary page-160
3. जनशिक्षाय संस्कृत, ड.ध्यानेशनारायणचक्रवर्ती, प्र. प्रोग्रेसिभवुकफोराम कलिकाता, पृ.सं-27
4. Sanskrit, the voice of India's souland wisdom, j.s purahit, N.C.E.R.T. New Delhi,2001,page-31
5. आश्रमेर रूप ओ विकाश, रवीन्द्ररचनावली-11 श खण्डः। प्र.विश्वभारती, कलकाता, पृ.सं-737
6. जनशिक्षाय संस्कृत, ड.ध्यानेशनारायणचक्रवर्ती, ऋषिधाम, दन्तपुकुर, उ.24. परगणा, प.वङ्गः, पृ.सं-29
7. उत्तिष्ठत, मा स्वप्त,च . मू. कृष्णशास्त्री, प्र.संस्कृतभारती, नवदेहली-वेङ्गालुरः, पृ.सं-82
8. जनशिक्षाय संस्कृत,ड.ध्यानेशनारायणचक्रवर्ती, प्रग्रेसिभ् वुकफोराम, कलिकाता-1967, मृ.सं-25
9. विष्णुपुराणम्,सं,पञ्चाननतर्करत्न, प्र. नवभारतपाब्लिसार्श, कलिकाता, वि. पु- 3/2/1.
10. मनुसंहिता, पञ्चाननतर्कतत्न, संस्कृतपुस्तकभाण्डार, कलिकाता, पृ,सं,- 3/56।
11. महाभारतम्, श्रीसीतारामदास ओऔङ्कारनाथ, आर्यशास्त्र, कलिकाता- महा.अनु-46/56.
12. तदेव- उद्यो-38/11.
13. तदेव- शा.प.-144/6.
14. तदेव- अनु.प-106/65.
15. मनुसंहिता, पञ्चाननतर्करत्न, संस्कृत पुस्कक भाण्डार, कलकाता, मनु.6/66.
16. तदेव- मनु.सं-8/359.

17. तदेव- मनु-3/60.
18. तदेव- मनु-3/61.
19. तदेव- मनु-9/26
20. तदेव- मनु.सं-1/108.
21. महाभारतम्, श्रीसीतारामदाय ओङ्कारनाथः, आर्यशास्त्र, कलिकाता, महा. वन. प. 213/30.
22. तदेव- महो. अनु.प – 116/38.
23. तदेव- महा. वन.प.- 297/35.
24. वा. सं- वि.आर. शर्म्मा(1988), वैदिकसंशोधनमण्डल, पूण्यत्तनम्, वा सं- 32/8.
25. ऋग्वेदसंहिता,(1988), ऋ.1/162/6.

**ग्रन्थ-ऋणम्-**


1. भारत ओताहार-संस्कृति- स्वामी अभेदानन्दः, विश्ववाणी, प्रका. रामकृष्णवेदान्तमठ,कलिकाता,1926
2. प्रचीनभारतीयसभ्यातार इतिहास, ड. प्रफुल्लचन्द्रघोष, प्रका. विवेकानन्दसाहित्यकेन्द्र,कलिकाता, 1398
3. संस्कृतिर सङ्कटे भारत, ध्यानेशनारायणचक्रवर्ती, ऋषिधाम, दन्तपुकुर, उ.24. परगणा,1985
4. हिन्दु संस्कृतिर स्वरूप, क्षितिमोहन सेन, विश्वभारतीग्रन्थनविभाग, कलिकाता,वं.1354
5. विदेशीपर्यटक ओ राष्ट्रदूतदेर वर्णनाय भारत, ननीगोपाल चौधुरी, पश्चिमवङ्गराज्यपुस्तकपर्षद्, 1984
6. मेगास्थेनीसेर भारतविवरण, रजनीकान्त गुह, विश्वभारतीग्रन्थनविभाग, कलिकाता वं-1351
7. हिन्दुसंस्कृति,सं. अहीन्द्रकुमारदे. प्र शाश्वत संस्कृति संसद्। मालदह, प.व-, 1389

8. युगजिज्ञासाय भारतीय संस्कृतिः, ध्यानेशनारायणचक्रवर्ती, प्र. विश्वहिन्दुपरिषद्, प.व.वं-1390
9. इतिहास परिचय(प्रथमभाग) विश्वभारती ग्रन्थन विभाग, कलिकाता, वं 1353
10. भारतेर इतिहास, प्राच्यपाश्चात्य द्वन्द्व, वङ्गविहारी चक्रवर्ती, भारतीय इतिहास सङ्कलन समिति-1988
11. आर्य-द्राविड़ तत्त्व, वङ्गविहारि चक्रवर्ती, भारतीय शिक्षणमण्डल, प.व. ई.1990
12. Ideas of India Education and culture, sw. vedananda, Bharat sevasram sangha.
13. वाणी ओ रचना, स्वामी विवेकानन्द, उद्‌बोधन, वाग्वाजार, कलिकाता, 10 सं 1990
14. Cultural heritage of India(i-vii) ed.sw lokeshwarananda, R.M.I.C.GOLPARK
15. इतिहासः संस्कृतिः राष्ट्रयता च, उ.एन्.एस्. राजारामः, संस्कृतभारती, नवदेहली,2011
16. नयन दृष्टम् ऐतिहासिकभारतम्, ड. कृष्णनारायणपाण्डेयः, प्रज्ञा प्रकाशन, लखनऊ32002
17. प्रचीनभारतस्य भौगोलिकस्वरूपम्, ड. कृष्णकुमारः, मयंक प्रकाशन, हरिद्वार,2002
18. संस्कृसाहित्यस्येतिहासः, रामचन्द्रमिश्र, चैखाम्बा विद्याभवन, चौक, वाराणसी
19. भारतीय संस्कृति ओ संस्कृतभाषा, स्वामी सिद्धानन्द सरस्वती, निगमानन्दसारस्वत आश्रम्, कोचिहार, व- 1391
20. SAMSKRITA DIGVIJAYA, SUNITI KUMAR CHATTERJEE, SANSKRIT COLLEGE KOL-1985

21. STUDY OF SANSKRIT IN SOUTH EAST ASIA, RAMESHCHANDRA MAJUMDAR, S. COLLEGE KOL-1974
22. कौटिलीय अर्थशास्त्र(1-2 खण्ड) ड. राधागोविन्दवसाक, जेनारेल, कलिकाता ई.1989
23. हिन्दुधर्मरसारतत्त्व, ड. दुर्गादासवसु सरस्वती, भारत सेवाश्रम संघ,कोलकाता वं-1394
24. विस्मृत इतिहास, पि.एन.ओक, प्र. विजयकृष्णदास, 36 कलेजरो, कोलकाता-1966
25. हिन्दुशास्त्र, सं.ध्यानेनारायण चक्रवर्ती, निउलाइट्, कोलकाता वं 1300
26. सनातनधर्म,(1-3खण्ड)स्वामीभूतानन्द,उद्बोधन,कलिकाता,वं1335
27. ऋग्वेदादिभाष्यभूमिका, स्वा. दयानन्दसरस्वती, वौदिकयन्त्रालयः, अजमेर, राज. सं 2041(1984)
28. वेदरहस्य, श्रीअरविन्द, श्रीअरविन्द आश्रम पण्डचेरी, (पूर्वार्द्ध+ उत्तरार्द्ध)1974



# संस्कृताश्रितायां भारतीयसंस्कृतौ विश्वभ्रातृत्वम्

वर्णानामर्थसङ्घानां रसानां छन्दसामपि।
मङ्गलानां च कर्तारौ वन्दे वाणीविनायकौ॥
यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश।
य औषधीषु यो वनस्पतिषु तस्मै देवाय नमोनमः।

का नाम संस्कृतिरिति जिज्ञासायां- संस्क्रियते मनः अनया इति संस्कृतिः इत्युत्तरं स्यात्। भारते भवा संस्कृतिर्भारतीया संस्कृतिः। भरत्येष प्रजाः सर्वास्ततो भरत उच्यते। भरत एव भारतम्। भरतानां समूहो भारतम्। प्रशस्ता उपलब्धिरभिव्यक्तिश्च संस्कृतिपदेनाभिधातुं शक्यते। एतेन तस्याः सम्बन्धो मानवस्य शरीरेण प्राणैः, मनसा, बुद्ध्या च अवश्यमेवास्ति इत्यवगम्यते। संस्कृतिश्चित्तभ्रममपहरति, चित्तमधिकृत्य निर्मिता काचिद् विशिष्टा भावधारा भवति। सा चेयं विश्ववारा यजुर्वेदे- सा संस्कृतिर्विश्ववारा - इति पदेनोक्ता। ऐतरेयब्राह्मणे - आत्मसंस्कृतिर्वाव शिल्पानि। एतैर्यजमान आत्मानं संस्कुरुते इति। अतः संस्कृतौ मानवमनोऽनुरूपं मानवजीवनस्य कलाया व्यक्तित्वस्य विकाशो भवति। अनया संस्कृत्या एव प्रत्येकं राष्ट्रस्य स्वतन्त्रास्तित्वं निरूप्यते। यद्यपि संस्कृतेः सम्बन्धः साक्षान्मानवतया सह भवति, तथापि जाति-धर्म-देश-कालादिभिर्भेदैः संस्कृतिरपि विभिन्ना वर्तते। अस्यां संस्कृतौ लोको मानवबुद्धेराध्यात्मिकभावनायाः सौन्दर्यभावनाया धर्मशीलयोश्चापि विस्तारं कुरुते। सर्वोत्तमाया मानवतावादोपलब्धेरभिव्यक्तेश्चाधारो भवत्यस्माकं श्रुतिस्मृतिपुराणकाव्यनाटकादिवाङ्मयमेव। तत्रोपदिष्टा विधिनिषेधादिनिर्देशाः सम्यक् चेष्टारूपेणाङ्गीक्रियते। संक्षेपतो यस्य तत्त्वस्य माध्यमेन मानवता आधिभौतिकीम्, आधिदैविकीम्, आध्यात्मिकीञ्च वैशिष्ट्यसन्ततिं सम्प्राप्नोति, तदेव तत्त्वं संस्कृतिपदवाच्यं

भवति। भारतीया संस्कृतिराचारविचारप्रधाना परिलक्ष्यते। विशुद्धैराचारैर्विशुद्धा विचाराः प्रादुर्भवन्ति। ये संस्कृतिसम्पोषणे सहायका भवन्ति दोषादिशोधनक्षमा क्रियाऽपि संस्कृतिशब्देन वक्तुं शक्यते, या केनचित् स्थूलपदार्थेन सूक्ष्मतत्त्वाधिगमायाधिक्रियते। एतेन मानवस्य मानवतायाः संस्कारिका क्रिया भवति संस्कृतिः। वस्तुत एतादृशी भारतीयसंस्कृतिर्मानवसंस्कृतिरूपेण विकाशं प्राप्तवती। एतस्याः संस्कृतेः समुद्भावका वैदिका ऋषय आसन्, यैस्तावत् धर्मस्य, परमसत्यस्य वेदमन्त्राणाञ्च साक्षात्कारः कृतः। साक्षात्कृतधर्ममन्त्राणामृषीणां सकाशाद् उपदेशपरम्परया श्रुतर्षिभिर्निधिरयं सम्प्राप्तः। श्रुतर्षयः समस्तं ब्राह्मणारण्यकवाङ्मयं प्रकाशितवन्तः। एवमेवोपनिषत्पुराणरामायण-महाभारतस्मृतिसाहित्यकाव्येतिहासविज्ञानादीनि वाङ्मयानि भारतीय-संस्कृतिं समृद्धामकुर्वन्। मानवमनीषायाश्चरमोत्कर्षः संस्कृतौ अस्यां दरीदृश्यते। मानवमनसः अस्याः संस्कारसम्पन्नतायाः शुद्धेर्वा अनेके उपाया निरूपिताः संस्कृतवाङ्मये। ते सर्वे एव संस्कृतेरङ्गानि। ततस्तेषां संस्कृतिरिति सामूहिकं नाम सार्थकम्। संस्कृताश्रया इत्यस्य कोऽभिप्रायः। संस्कृतमाश्रयो यस्याः सा संस्कृताश्रया। संक्षेपेणेदं वक्तुं शक्यते यदस्माकं संस्कृतिः सामान्यतः समस्त एव वाङ्मये, विशेषतश्चेयं संस्कृतिः निरुक्तेषु वेद-स्मृति-पुराण-रामायण-महाभारतादिषु प्रकटितस्वरूपा प्रकाशिततत्त्वा च वर्तते। एवमेतस्याः स्वरूपं निर्णेतुमेतदाधारभूतस्य संस्कृतवाङ्मयस्य परिचयो गभीराध्ययनं चिन्तनञ्च सर्वथोपेक्षितम्। विविधस्यास्य वाङ्मयस्य प्रतिपाद्यविमर्षणेनैवास्माकं संस्कृतेराधारभूततत्त्वानामवबोधः कर्तुं शक्यः। वेदपरवर्तिन ऋषयो व्याकरणादिवेदाङ्गानां प्रवर्तका आसन्। मन्त्रद्रष्टृभिः ऋषिभिः कर्मज्ञानयोराधानं कृतम्। श्रुतर्षिभिर्वैदिकधर्मो बहुजनबोधगम्यः कृतः। तदीया संस्कृतिर्यज्ञसंस्थारूपेण प्रकाशिताभूत्। तत्पश्चात् उपनिषदां विचारप्रधाना तर्कपद्धतिः मोक्षपुरुषार्थस्य नवीनं

मार्गमुद्घाटितवती। अस्याश्चरमपरिणतिर्दर्शनशास्त्राणां विविधशाखाभिः प्रतिफलिता सञ्जाता।

पुराणसंस्कृतिर्वैदानां समन्वितसंस्कृतिमुच्चतमविकाशशिखरं सम्प्रापितवती। स्मृतिसंस्कृतिर्नीतिनिर्धारणं कृतवती। लोकप्रियेषु आदर्शाख्यानोपाख्यानेषु आश्रितमुदात्तचरितानां राजपुरुषादीनां जीवनादर्शं काव्यमयकलेवरे संयोज्य महर्षिवाल्मीकिना रामायणस्य, व्यासेन च महाभारतस्य रचनया परम्परानुगता सांस्कृतिकधारा युगानुरूपा प्रवर्तिता। अनयोः ग्रन्थयोर्धर्मस्य मर्यादायाश्च लोकमङ्गलकारी सन्देशः सन्निहितः। जैनबौद्धधर्मयोरपि भारतीयसंस्कृतेरुन्नयनेऽविस्मरणीयमासीत् किञ्चिदवदानम्। एवं समग्राया एव भारतीयसंस्कृतेर्व्यापकतत्त्वमस्ति - सत्यं शिवं सुन्दरम् चेति। दर्शनेषु सत्यस्वरूपम्, नीतिशास्त्रे शिवस्वरूपम्, कलाक्षेत्रे च सुन्दरस्वरूपं दृश्यते। एषां त्रयाणां मूलतत्त्वानां समाहार एव संस्कृतिः, यया मानवताया हितं कल्याणञ्चानारतं प्रवर्तते। मुख्यतः संस्कृतेराधारराचारः, सभ्यतायाश्चाधारो विचारः। आचारैः संस्कृतेर्विचारैश्च सभ्यताया उद्गमोऽभूत्। ज्ञानस्य यत् धाराद्वयमुपलभ्यते- अनुभवजन्यं बुद्धिजन्यञ्च, तत्रानुभवजन्यं ज्ञानं संस्कृतेः, बुद्धिजन्यञ्च ज्ञानं सभ्यताया आधारो वर्तते। एतेनानुभवजन्यज्ञानस्य नित्यत्वात् संस्कृतिर्नित्या, बुद्धिजन्यज्ञानस्य परिवर्तनशीलत्वात् सभ्यताऽपि परिवर्तनशीला भवति। संस्कृतिर्जनसमुदायेन सम्बद्धा, सभ्यता च व्यक्तिसम्बन्धाऽवभासते। समष्टिधिया आचारो बहिरङ्गरूपेण विचारश्चान्तरङ्गरूपेण संस्कृतिसमुद्भावनाय प्रभवति। सेयं भारतीयसंस्कृतिः सर्वतोऽपि वरीयसी अस्तीति सर्वसम्मतम्। अत्र हि मानवतायाः चरमा संस्कृतिश्चित्रिता। अभिवादनशीलमयी संस्कृतिः कीर्तिता। विश्वसभ्यतायां परमविस्मयावहास्माकीनेयं भारतीयसंस्कृतिः। विश्वेतिहासे बहवः

प्राचीनसभ्यताः (ग्रीस्-रोमक-व्याविलन्-मिशर-महाचीनादयः) सम्प्रति ध्वस्ताः सत्यः विस्मृतेरतलान्तसागरे निमज्जिताः सन्ति। भारतीयसंस्कृतिरद्यापि बहुबाधातिक्रमणं कुर्वती आत्मशक्तेः प्राबल्यादमरा वर्तते। इदमेकं वैज्ञानिकं सत्यं यत्- यस्याः पृथिव्यामस्ति प्रयोजनं तदेव जीवति। प्रयोजनाभावे प्रकृतिनियमेनैव तन्म्रियते। विश्वसभायां भारतस्य प्राथमिकोऽन्तिमश्च परिचयस्तस्य संस्कृत्या राजनैतिकार्थनैतिकपरिचयेन वा नैव। भारतीयसंस्कृतिरिदानीमपि प्रवहन्ती राजते तत्र कारणं तस्याः सांस्कृतिकवैशिष्ट्यम्। समस्तमानवजातेः अभ्युदयदायका निःश्रेयससाधका ये सद्गुणाः सन्ति, तेषां स्वरूपं तल्लाभाः तद्ग्रहणौचित्यं च संस्कृतवाङ्मये यथा विस्तरेण वर्णिताः न तथान्यत्र कुत्रापि। संस्कृतवाङ्मयमिदमिमां भारतीयां संस्कृतिं पुष्णाति। अस्याः संस्कृतेः विनाशः मानवतायाः विनाश एव। अनया संस्कृत्या भारतस्य विश्वेऽस्मिन् महत्त्वमक्षुण्णमस्ति इत्यत्र संस्कृतेरस्याः महत्त्वमवश्यम् स्वीकार्यम्। संस्कृतभाषा एव अस्याः संस्कृतेः पोषिका, धारिका, वाहिका च। एत एवोच्यते- भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा। अनया संस्कृत्या भारतीया मनीषिणः जगद्गुरवोऽभूवन् अघोषयंश्च - एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः। अस्याः संस्कृतेः प्रमुखतत्त्वानि धर्मार्थकाम-मोक्षाख्याः चत्वारः पुरुषार्थाः। अस्या उदारता एतेनैव प्रकटीक्रियते यत्-

यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति।

उदरपूर्तेरधिकसङ्ग्रही चौरः दण्डनीयश्च। अस्याः संस्कृतेः प्रभावेणैव भारतं जगद्गुरुपदे समासीनमासीत्। सा सर्वासां संस्कृतीनां मूर्ध्नि विराजते, विश्वस्य न कापि संस्कृतिः भारतीयसंस्कृतिमतिशेते। भारतीयसंस्कृतिः विश्वान् जनान् उपदिशति- सत्यमेव जयते नानृतम्, सर्वं सत्ये प्रतिष्ठितम्, सत्येन समः न कश्चिद्धर्मो, सत्यं कण्ठस्य भूषणम्,

सर्वस्य जगतो मूलं सत्यमेव निगद्यते, अश्वमेधसहस्राद्धि सत्यमेवावशिष्यते, न हि सत्यात् परं तपः, ब्रह्मैव सत्यं सत्यमेव ब्रह्म, ब्रह्म सत्यम्, सत्यं वद, सत्यान्न प्रमदितव्यम्, इत्यादीनाम् आधारशिलानामुपरि भारतीयसंस्कृतिः संस्थापिता वर्तते। भारतीयसंस्कृतेरन्यद्वैशिष्ट्यं तावत् तस्या देवपरायणता विद्यते। तथा हि भारतीयप्रगमनस्य प्रायः सर्वाणि क्षेत्राणि देवपराणि सन्ति। एकस्मात् पुरुषात् ब्रह्मणो वा जगतः सृष्टिं मत्वा दार्शनिकपद्धत्या तद् ब्रह्माभिज्ञाय मानवजीवनस्य सर्वोच्चमुद्देश्यं मुक्तिरितिसम्भावितम्। वैदिकदर्शनानुसारेण तदेकमेव ब्रह्म जगत्यस्मिन् सर्वत्र व्याप्तम्। तदर्थं भारतीयाः प्रवृत्तयः सामान्यतो देवपराः सञ्जाताः। भारतीयास्तु देववाणीमश्रावयन्। सर्वं वस्तुजातं देवेभ्यः समर्पणीयम्, भूतयज्ञे सर्वेषां प्राणिनां दिव्यस्वरूपं हृदि धारयन्तस्तेभ्यो भोजनार्पणम्, अतिथियज्ञे देवरूपमेवातिथिं सम्मान्य तं सत्कृतवन्तश्च। अतिथिदेवो भव - इत्यस्ति भारतीयसंस्कृतेः भूषणम्। भारतीयानां शिल्पकलासाहित्यादिप्रवृत्तयः सामान्यतो देवपरा आसन् इति निःसन्दिग्धमेव। भारतस्येमामेव देवपरायणतामाश्रित्य सर्वजीवैक्यं सुप्रतिष्ठितम्, वसुधैव कुटुम्बकमिति भावना प्रादुर्भूता च। भारतीयसंस्कृतौ धर्मपदस्यातिव्यापकाङ्गने प्रायः सर्वेऽपि नियमा धर्मे समावेशिता यैर्व्यक्तेरभ्युदयेन सह समष्टेराधिभौतिकाध्यात्मिकोत्कर्षाः सम्भाविताः। जीवनस्य प्रथमश्वासतोऽन्तिमश्वासपर्यन्तं प्रतिक्षणं मानवेन कथं व्यवहर्तव्यमिति धर्मो बोधयति। अनया संस्कृत्या मानवो धर्मेण नियम्यते। धर्मस्यैतन्नियमनं मानवं दासीकृत्य तद्विकासे बाधको न भवति। स धर्मो मानवसभ्यतायाः कृते सांस्कृतिकोत्तराधिकारोरूपो निधिर्भवति। धर्मस्यास्य निदर्शनेन मानवस्य सत्यानुभवः सर्वोच्चं विकसति। भारतीयसंस्कृतौ प्रायस्त एव सिद्धान्ता गृहीता येषामनुभूतिः समाजाग्रणीनां महाजनानां सत्यप्रयोगे समजायत। संस्कृत्यामस्यां

निदर्शितं यन्मानवः संस्कारैः स्वयोग्यतां कथं वर्धयेत्, स्वोत्कर्षं कथं विदध्यात्, सामाजिकैः सह कथं व्यवहरेयुः, सत्त्वविकाशाय कीदृशं भोज्यपेयादिकमुपयुज्येत, कीदृशे स्थाने निवसेत्, कथं वा शरीरशुद्धिर्विधेया, को व्यापारः सेवनीयः, किं परित्याज्यम्, के श्रेष्ठनियमाः, के उच्चादर्शाः इति इमे विषयाः भारतीयसंस्कृतेरङ्गानि सन्ति। ईदृशी धर्मपरता भारतीयसंस्कृतेरनुपमविशेषता। अस्याः संस्कृतेरेव प्रादुर्भूता विश्वकल्याणपरा इमा मानवीयाः पुण्यमय्यः प्रवृत्तयः। सर्वेषां सुखस्य कामना भारतीयसंस्कृतेरनुपममवदानम्। संस्कृतौ अस्याम् उत्कृष्टतरा सा भावना सम्प्रतिष्ठिता यथा- स्वार्थो यस्य परार्थ एव स नृणामग्रणीः, एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये, सिद्धान्तान् इमान् निधार्य भारतीया मनीषिणः आत्महिताय तादृशानि वस्तूनि स्वल्पं भुक्तवन्तो येषामधिकोपयोगेन अपरे कष्टमनुभवेयुः। अयं सिद्धान्तादर्शो वैदिकजैनबौद्धसंस्कृतिष्वपि समानं प्रतिष्ठापितः। संस्कृत्यानया सिद्धान्तितं यत् - मा कश्चिद् दुःखाकुरुत। सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेत्॥ कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्। दुर्लभः पुरुषो लोके सर्वभूतदयापरः।इति। लोककल्याण-कर्तृत्वमेव परमं कारणं माहात्म्यस्य - इत्युत्तममेव वैशिष्ट्यं भारतीयसंस्कृतेः। लोककल्याणं नाम प्रायशस्त्यागेन, आत्मसुखनिरपेक्षतया, श्रमेण, सेवाधर्मेण, योग्यताधानेन च संसाध्यम्। लोककल्याणवृत्त्या हि देवर्षिणां ब्राह्मणाचार्याणां च ज्यैष्ठ्यं परमं पदञ्च प्रमाणितम्। तद् यथा-

एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्।
योऽसं विभज्य भृत्येभ्यः को नृशंसतरः ततः।
भक्ष्यं पेयमयो लेह्यं यच्चान्यत् स्वादु भोजनम्।
प्रेक्ष्यवाणेषु योऽस्नीयात् नृशंसमिति तं वदेत्।

अन्यान्येतादृशानि वाक्यानि-

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिरः॥
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः॥

एवमस्त्यत्र भारतीयसंस्कृतौ समतादृष्टिः। भारतीयसंस्कृतेः प्रायः सर्वेषु क्षेत्रेषु भूमा विलसति। उपनिषद्युक्तम्- यो वै भूमा तत् सुखं नाल्पे सुखमस्ति। भूमैव सुखम्। उपनिषद्येवमपि उक्तम्- ईशावास्यमिदं सर्वं यत्किञ्चज्जगत्यां जगत्। अन्यच्च- आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः। इत्येतैरादर्शैरेव समस्तविश्वजीवनमपि आनन्दमयं भवेत्। मानवजीवने समतोपलब्धिरपि सर्वाधिकं महत्त्वपूर्णं स्थानमधिकरोति। समतेयमपि भारतीयसंस्कृतेः परमा शिक्षा। समतयानया मानवोऽत्र पशुपक्षिणः प्रति उदारतां स्नेहञ्च व्यतरत्। स सर्वेषु प्राणिषु सद्व्यवहारम् अकरोत्। मानवोऽत्र सर्वेषां सुखं कामयते स्म अनया संस्कृत्या प्रेरितस्सन्। अत्रैव मानवः सदैव सर्वान् सर्वत्र समभावेन - समः शत्रुषु मित्रेषु पण्डिताः समदर्शिनः, शुनि चैव श्वपाके च पण्डिताः समदर्शिनः- इत्यादिवाक्यैः सर्वत्रात्मानं समष्टिरूपेण पश्यन् सद्व्यवहारं कर्तुं कटिबद्धो भूत्वा विश्वमाह्वयति। सम्पूर्णं विश्वं मम कुटुम्बमित्यस्ति वैश्विकभावनायाः आधारः। भावनेयं विश्वमानवे भ्रातृत्वं जनयति। यत् पिण्डे तत् ब्रह्माण्डे - अस्यायमभिप्रायो यत् व्यष्टौ यत् विद्यते तदेव समष्टौ वर्तते। भारतीयसंस्कृतौ सर्वदैव इदं विश्वभ्रातृत्वं समुच्चकण्ठैः घोषितम्। संस्कृतवाङ्मये सर्वत्र विश्वबन्धुत्वस्थापनं, सौभ्रातृत्वं, विश्वकल्याणञ्च कीर्त्तितमस्माकं पूर्वजैः। तद्यथा-

श्रृण्वन्तु विश्वे अमृतस्य पुत्राः, आ ये धामानि दिव्यानि तस्थुः।

अत्र ऋषिकण्ठेन विश्वे जनाः अमृतस्य पुत्रा इति गीता, न पापिनः न वा काफेर्(अविश्वासिनः) इति। तन्माता पृथिवी तत् पिता द्यौः, द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्, माता

भूमिः पुत्रोऽहं पृथिव्याः, आ नो भद्राः क्रतवो यन्तु विश्वतः, एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा, माता मे पार्वती देवी पिता देवो महेश्वरः। बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्॥

आभिः सूक्तिभिः ज्ञायते यत्- वयं सर्वे एकस्य विश्वपरिवारस्य सदस्याः स्मः। माता पृथिवी द्यौश्चास्माकं पिता अस्ति। विश्वस्थाः सर्वे जना मम सहोदराः सन्ति। सर्वेषु आत्मदर्शनं सर्वेषां हृदये स्थितस्य आत्मनः स्वस्मिन् दर्शनम् अयमेव विश्वबन्धुत्वस्य दृढाधारो भवति। विश्वभ्रातृत्वभावनायां भारतीयसंस्कृतेः प्रश्नातीतः सहयोगः कथं वर्तते, तदत्रोल्लिख्यते - मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे मित्रस्य चक्षुषा समीक्षामहे। अत्र सर्वभूतेषु मित्रदृष्टिभावस्य समर्थनं प्राप्यते। सर्वभूतेषु मैत्रीभावो हि अत्र निर्धारकं तत्त्वमस्ति। समग्रवसुधां प्रति कुटुम्बभावनायाश्चरमो विकासः सकलप्राणिसुखकामनायां विश्वभ्रातृत्व-भावनायां च प्रतिष्ठितो दरीदृश्यते संस्कृतवाङ्मये। तद् यथा -

जीविते यस्मिन् जीवन्ति सर्वे संसारवासिनः।
सफलं जीवितं तस्य आत्मार्थे को न जीवति॥

पुनरन्यत्-

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम्।
समदृष्टेस्तदा पुंसः सर्वाः सुखमयाः दिशः॥

अत्र विश्वबन्धुत्वभावनैवास्माकं जीवनलक्ष्यं भवेदिति घोषितम्।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।
सर्वभूतस्थितं यो मां भजत्वेकत्वमास्थितः।
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुनः।

इमे गीतोपदेशाः सर्वभूतेषु विश्वभ्रातृत्वं सञ्चारयन्ति। विशालेऽस्मिन् भारतीयसंस्कृतिप्राङ्गणे जाति-धर्म-वर्ण-लिङ्ग-निर्विशेषं विश्वे मानवाः समवेताः सन्ति इति दृश्यते। अत्रेदं वेदवाक्यं - यत्र विश्वं भवत्येकनीडम्- साफल्यं लभते, यथार्थं प्रतीयते। अस्माकमस्यां संस्कृतौ विश्वभ्रातृत्वभावना सर्वत्र स्वतः निःसृता अस्ति इति संस्कृतवाङ्मयस्य सामान्यपर्यालोचनया ज्ञायते। तद् यथा रामायणे- अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम। तथा च - सर्वेषु स हि धर्मात्मा वर्णानां कुरुते दयाम्। मनुनोक्तम्- ममायं स्मृतिग्रन्थो मानवधर्मशास्त्रमिति - मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते, इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्द्विजः - इति। भागवते एकस्य श्लोकस्योल्लेखो वर्तते, यत्र दुःखतप्तानां विश्ववासिनां दुःखेन वयं कथं सुखिनः स्याम इति व्यथा प्रकटिताऽस्ति-

न कामयेऽहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा।
आर्तिं प्रपद्येऽखिल दुःखभाजामन्तः स्थितो येन भवन्त्यदुःखाः

अन्यस्मिन् श्लोकेन राज्ञा रन्तिदेवेन कृता याचनाऽप्यत्रोल्लेखनीया-

न त्वहं कामये राज्यं न स्वर्गं न पुनर्भवम्।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्॥

इति संसारस्य सर्वजीवानां कल्याणं संस्कृतवाङ्मयस्य परमं वैशिष्ट्यम्। तद् यथा - सर्वेषां मङ्गलं भूयात् सर्वे सन्तु निरामयाः। पापानि सर्वजगताञ्च शमं नयाशु। उत्पातपाकजनिताञ्च महोपसर्गान्। विश्वार्त्तिहारिणि लोकानां वरदा भव। हरसि भीतिमशेषजन्तोः इति। सर्वप्राणिषु व्यापकः एक एव परमात्मा। वर्ण-जाति-धर्म-देशादिभिः स्वतन्त्राः सन्तोऽपि सर्वे मानवाः समानाः। परमेश्वरस्य पुत्राः सर्वे, केवलं चिन्ताभेदकारणात् मानवोऽयमेकस्मात् मानुषात् भिन्नो न स्यात्। तदुक्तमस्मदृषिभिर्यथा- जीवो ब्रह्मैव नापरः, सर्वं खल्विदं ब्रह्म, एकं रूपं बहुधा यः करोति, ममैवांशो जीवलोको जीवभूतः सनातनः, यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः, तत्र को मोहः कः शोक

एकत्वमनुपश्यतः, एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा, अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः, आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन, सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्, एकमेवाद्वितीयम्, एकं सद्विप्रा बहुधा वदन्ति, एकं सन्तं बहुधा कल्पयन्ति, एकं बीजं बहुधा शक्तियोगात्, एकं ज्योतिर्बहुधा विभाति, एकं बहूनां यो विदधाति कामान्, एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति, देवताया एक आत्मा बहुधा स्तूयते, एकैवाहं जगत्तत्र द्वितीया का ममापरा, नृणामेको गम्यः, स एक एव प्रभुरद्वितीयः, एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च, सर्वभूतात्मके तात जगन्नाथे जगन्मये, परमात्मनि गोविन्दे मित्रामित्र कथा कुतः, यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। सर्वे देवा एकस्यैव परब्रह्मणो विकाशाः- एवं सन्ति बहूनि विश्वबन्धुत्वविधायकानि विश्वमैत्रीभावमूलानि वचनानि संस्कृतवाङ्मये। इयं संस्कृतिः कदापि देशविशेषस्य भौगोलिकखण्डे सीमाबद्धा नासीत्। भारतेन कस्यापि मतविशेषस्यैव प्राधान्यं नाङ्गीकृतम्। सर्वेषां मतानां मेलनमेव भारतीयसंस्कृतेर्मूलं वैशिष्ट्यम्। कविकुलललामभूतस्य कालिदासस्य काव्येषु दृश्यते यत् – नदनदीपर्वतोपवनकुसुममधुकरपक्षियक्ष-रक्षोगणदेवतिर्यङ्मनुष्यमत्स्यमृगगिरिनिर्झरगिरिकन्दरवृक्षलतातृणज्योति रादिसर्वमपि प्रकृतिजातं समानप्रेम्णा स्वीकृत्य सर्वत्र समतादृष्टिः प्रकटिता कवीन्द्रेणानेन। विश्वश्रेयसाधनेन काव्यस्य काव्यत्वं सिद्ध्यति-इत्युक्तिः सार्थकतां गता संस्कृतकाव्येषु। अलङ्कारशास्त्रे विमर्षणे कृते सति विश्वे निगूढा काचिदैक्यता दृष्टिपथमायाति। एक एव उपमालङ्कारः किञ्चिद्भेदेनैव अनेकालङ्कारभावं भजते। अनेनात्र अनेकालङ्कारेषु मध्ये निगूढमेकत्वं भासत इति व्यक्तं भवति। एवमनेकेषु चराचरगतसर्ववस्तुषु सादृश्यदर्शनरूपा समतादृष्टिः उपमालङ्कारेणैव सम्भवतीति। उदात्तसंस्कृतेः फलं समृद्धिरेव। सा च द्विविधा - भौतिकी, आध्यात्मिकी

च। भारतीयसंस्कृतौ द्वयोश्चरमोत्कर्षः सुस्पष्टः। पुरा भौतिकी समृद्धिरत्र तथा आसीत्, येन अनेकाः तथाकथिताः सभ्यजातयः बहुवारम् आक्रमणं कृतवत्यः सर्वस्वमपहृतवत्यश्च। इदानीमपि मानवसम्पदा आध्यात्मिकसम्पदा च देशोऽयं धनी। संस्कृतिस्तु मानवसत्त्वविकाशस्य सा प्रक्रिया भवति, यया मानवः स्वकीयं जीवनोद्देश्यमधिगच्छति, मानवकल्याणे च प्रवृत्तो भवति। प्राणिनां दुःखे दुःखस्यानुभूतिः एवं सुखे सुखस्यानुभूतिरेव मानवतायाः संरक्षणस्यैकमात्रो धर्म इत्युपदिशतीयं संस्कृतिः। अत्र तद् यथा – मा हिंस्यात् सर्वभूतानि, अहिंसा परमो धर्मः, परोपकाराय पुण्याय पापाय परपीडनम्, आत्मनः प्रतिकूलानि परेषां न समाचरेत्, अद्राहः सर्वभूतेषु कर्मणा मनसा गिरा, अहिंसार्थाय भूतानां प्रवचनं कृतम्, यः स्याद् अहिंसासम्पृक्तः स धर्म इति निश्चयः – इत्यादिभिर्व्याक्यैः अहिंसया विश्वमैत्रीभावना सुप्रतिष्ठिताऽसीत्। अत्रैवोदारा ऋषयः मानवतायाः विश्वबन्धुत्वभावानाया गीतं गीत्वा सङ्कीर्णपरिसराद् बहिरागत्य विश्वकल्याणाय वैश्विकभावं स्थापितवन्तः। शत्रूणां कृतेऽपि प्रार्थितवन्तोऽस्मदृषयः मित्राणां विषये का कथा, वस्तुतः अत्रत्यानां महापुरुषाणां हृदये वैरभावनायाः स्थानमेव नासीत्। तर्पणमन्त्रे तन्मूर्तरूपं प्राप्नोत्-

आ ब्रह्म-भुवनाल्लोकाः देवर्षि-पितृ-मानवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः॥
अतीत-कुल-कोटीनां सप्तद्वीप-निवासिनाम्।
मया दत्तेन तोयेन तृप्यन्तु भुवनत्रयम्॥
ये बान्धवा अबान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिलां यान्तु ये चास्मत् तोयकाङ्क्षिणः॥
देवा यक्षास्तथा नागा गर्धर्वाप्सरसः सुराः।
क्रूराः सर्पाः सुपर्णाश्च तरवो जिह्मगाः खगाः॥
विद्याधरा जलाधारास्तथैवाकाशगामिनः।

निराहाराश्च ये जीवाः पापे धर्मे रताश्च ये॥
तेषामाप्यायनायैतद् दीयते सलिलं मया॥

श्राद्धमन्त्रेऽपि ईदृशी उदारभावना सुस्पष्टा-

येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु लोकाय सुखाय तद्वत्॥

अन्यच्च –

योऽत्र मां स्निह्यति तस्य शिवमस्तु सदा भुवि।
यश्च मां द्वेष्टि लोकेऽस्मिन् सोऽपि भद्राणि पश्यतु॥

मनुष्याणां जयगानं कुर्वतीयं संस्कृतिर्वदति – न मानुषात् श्रेष्ठतरं हि किञ्चित्। संस्कृताविह मानवजीवनस्य महन्महत्त्वमङ्गीकृत्य, सर्वैः मानवैः सह मैत्रीभावं सम्पाद्य, पारस्परिकं भेदभावं निरस्य, विश्वात्मना सह एकीभूय, सर्वैः सह सुखेन निवस्य, संविभज्य ज्ञानसुफलं भुक्त्वा, विश्वबन्धुत्वभावनायाः प्रेमप्रवाहे निमज्य, वसुन्धरायामस्यां स्वर्गस्यानन्दमयनन्दनकानननिर्माणस्याह्वानं कृतं दृश्यते-

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे सञ्जानाना उपासते॥
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि॥
समानी व आकुतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥

पुनश्च-

ओम् सह नाववतु सह नौ भुनक्तु, सहवीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै॥

अत्रत्या मुनयः ऋषयः महापुरुषाः कवयः सर्वेऽपि विश्वभ्रातृत्वबोधस्य प्रतिष्ठार्थं समर्पितचित्ता आसन्। मानवकल्याण-निरताश्चासन्- तस्मात् – वसुधैव कुटुम्बकमित्यस्य प्रसूतिरियं संस्कृतिः।

अस्याः क्रोडादेव विश्वभ्रातृत्वभावनाया जन्म इति निश्चप्रचम्। संसारे सृष्टेर्नियमानुसारं बहवः संस्कृतयः समुद्भूता विलयं गताश्च। सृष्टि-स्थिति-प्रलयनियममङ्गीकुर्वन्ति एताः संस्कृतयः। परन्तु अस्मदीयेयं संस्कृताश्रिता वेदाश्रिता च संस्कृतिः सृष्टिनियमरहिता सती अमराविच्छिन्ना प्रवहन्ती स्थास्यति। यतः- अच्छिन्नस्यते देवसोम सुवीर्यस्य रायस्पोषस्य दातारः स्याम। सा प्रथमा संस्कृतिर्विश्ववारा.. ..। सदैव इमां संस्कृतिं प्रक्रियारम्भे अनुसरन्ति ऋषयस्तदर्थमेषा प्रथमा संस्कृतिः। सृष्ट्यारम्भे इमामवलम्ब्य सृष्टिप्रक्रियाप्रारम्भो भवति।

उपसंहारे एतदुच्यते यत्- अस्मत्पूर्वजैः लोकहितचिन्तनपर-विश्वकल्याणविधायक-सौभ्रात्रसंस्थापननिष्ठ-शान्तिवचनैः भारतीय-संस्कृति-पताका विश्वाकाशे प्रासर्य्यत। सा परम्परा वर्ध्यताम्। भारतीयसंस्कृतेर्विश्ववेदिकायां विश्वमानवैः सम्भूय विश्वभ्रातृत्वगीतमेवं गीयताम्-

शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः।
दोषाः प्रयान्तु शान्तिः सर्वत्र सुखी भवतु लोकः॥
स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु
काले वर्षतु पर्जन्यः पृथिवी शस्यशालिनी।
देशोऽयं क्षोभरहितः सज्जनाः सन्तु निर्भयाः॥
प्रवर्त्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती महीयताम्।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
सर्वः सद्बुद्धिमाप्नोतु सर्वः सर्वत्र नन्दतु॥
स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।
मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी॥

**ग्रन्थ-ऋणम्**


1. संस्कृतनिबन्धावली – डॉ.रामजी उपाध्यायः
2. संस्कृतनिबन्धमन्दाकिनी – डॉ.आद्याशङ्करमिश्रः
3. अक्षरभारती – डॉ. श्रीरञ्जनसूरिदेवः
4. हिमांशुश्रीः – सम्पा. डॉ.सत्यनारायण आचार्यः
5. शोधप्रभा – सम्पा. डॉ. वाचस्पति उपाध्यायः
6. शिक्षा एवं संस्कृति – डॉ. भास्करमिश्रः
7. जनशिक्षाय संस्कृत – डॉ. ध्यानेशनारायणचक्रवर्त्ती
8. हिरण्मयेन पात्रेण – डॉ. आशारामत्रिपाठी
9. संस्कृतवाङ्मये जातीयताभावना, डॉ. आदित्यनाथभट्टाचार्यः
10. मिश्रनिबन्धावली – डॉ. रामनारायणमिश्रः
11. शिक्षा का सांस्कृतिक इतिहास – डॉ नत्थुलाल गुप्त
12. भारत ओ ताहार संस्कृति – स्वामी अभेदानन्द
13. महाजाति गठने हिन्दुधर्म – स्वामी विकाशानन्द
14. हिन्दुधर्मेर महत्त्व ओ वैशिष्ट्य – स्वामी अद्वैतानन्द
15. हिन्दुत्वम् – स्वामी वेदानन्द
16. वैदिक साम्यवाद – स्वामी प्रभुपाद
17. हिन्दुसंस्कृतिर स्वरूप – क्षितिमोहन सेन




# संस्कृतशिक्षणपद्धतिः

सा मे वसतु जिह्वायां, वीणापुस्तकधारिणी।
मुरारिवल्लभादेवी, सर्वशुक्ला सरस्वती॥

गणतन्त्रमयेऽस्माकं राष्ट्रे सर्वेषां नागरिकाणां संस्कृतस्वरूपप्रतिबोधनार्थं संस्कृतशिक्षायाः साधारणीकरणार्थं नूतनस्य कस्यचन विधेर्निर्माणं कर्त्तव्यम्। येन विधिना सामान्यजनानां संस्कृतेनिहितानां तत्त्वानां सम्यक् ज्ञानाय किमपि काठिन्यं न भवेत्। संस्कृतं भाषादृष्ट्या पश्यामश्चेत् तत्र सरलता उपेक्षितास्ति। कारणं सामान्याः जनाः सरलया भाषया व्यवहरन्ति। अतोऽधिकाधिकानां जनानां संस्कृते रुचिवर्द्धनाय, भाषात्वेन संस्कृतस्योपयोगाय च काचन परीक्षिता पद्धतिरवलम्बनीया। तां पद्धतिमाश्रित्य समग्रे देशे प्राथमिकस्तरादारभ्य उच्चतरस्तरं यावत् सर्वेषां सुखबोधाय संस्कृतशिक्षाया काचन नूतना धारा प्रवर्त्तनीया। तेन पाठ्यक्रमर्निर्माणस्य सार्थकता। सरलं संस्कृतमाश्रित्य सम्भाषणान्दोलनं संस्कृतच्छात्राणां रुचिवर्द्धनाय, देशमानसं संस्कृतानुकूलकरणाय, संस्कृतज्ञानां स्वाभिमानबर्द्धनाय च अलम्। संस्कृतसम्भाषणान्दोलनस्य प्रभावेणैव भारतसर्वकारेण "संस्कृतवर्षम्" उद्घोषितमासीत्। संस्कृतस्य सर्वग्राह्य-सर्वमान्य-भाषात्वेनोन्नयनमेवास्माकं लक्ष्यम्। तदर्थं काचन विनूतना शैली रचनीया।

कस्यचन नूतनपाठ्यक्रमस्य प्रवर्तनात् प्रागेव आधुनिकयुक्त्या, वलिष्ठविचारेण, जागतिकोदाहरणेन च तस्य पाठ्यक्रमस्यानुकुलं वातावरणं रचनीयम्। कारणं वीजानुकुले क्षेत्रे निर्माणे कृते सति अपेक्षितं फलं प्राप्यते। नान्यथा। कथनस्याभिप्रायोऽयं यत् देशमानसं संस्कृतनिष्ठं करणीयमिति। भारतीयशिक्षानीतौ संस्कृतस्यावश्यकविषयत्वेन

अन्तर्भावे कृते लाभालाभाश्च जनाः बोधनीयाः। येन प्रभाविताः जनाः एव शिक्षायाः सर्वस्मिन्क्षेत्रे संस्कृतस्य प्रवर्त्तनाय सर्वकारं प्रभावयिष्यन्ति। उदाहरणर्थमुच्यते-. पश्चिमबङ्गे प्राथमिकस्तरे पुनः आङ्ग्लभाषायाः प्रवर्तनाय जनानामान्दोलनं सफलं जातम्। तेन आन्दोलनेनैव सर्वकारस्य मतपरिवर्तनं, जनमतस्य प्रवर्तनमुल्लेखयोग्यम्। अपरमेकेनान्दोलनेन मातृभाषया सर्वकारस्य कार्यपरिचालनम्। विज्ञान-प्रभृतीनां पाठ्यक्रमगतानां विषयाणां मातृभाषया पठनं-पाठनञ्च सर्वकारेणानुमतम्। केवलं पद्धतिनिर्माणेऽभीष्टं फलं न प्राप्स्यते। यावत् पद्धतेरनुकूलविचाराः जनान् न प्रभावयिष्यन्ति तावत् सर्वं निष्फलम्। अतः पद्धतिनिर्माणात् प्रागेव तां पद्धतिं परिपोषयितुमपेक्षितं जनसमर्थनं स्यात्। इदमपि पाठ्यक्रमनिर्माणे, निर्मितस्य पाठ्यक्रमस्य साफल्यविधाने च सहायकं स्यात्।

आदौ विचार्य्यते, अल्पेनैव कालेन, भारते द्रुतगत्या आङ्गलभाषायाः प्रचारः प्रसारश्च केन द्वारेण निष्पन्नः? येन सहस्रवर्षेभ्यः अस्मदीये रक्ते प्रवाहितां, निःश्वासे प्रश्वासे चाचरितां, भाष्यमाणां, तां संस्कृतभाषां, वयं कठिना, निर्जीवा इत्यादिभिः विशेषणैर्भूषितवन्तः। शतात् 99 प्रतिशतं जनाः संस्कृतं न व्यवहरन्ति, ईदृशी स्थितिरापतिता। परन्तु आङ्गलभाषायां निष्णाताः जनाः दिनं दिनं वर्द्धन्ते। तत्र राजनैतिकं सामाजिकम् ऐतिहासिकम् इत्यादीनि बहूनि कारणानि स्युः। ईदृश्याम् स्थितौ, अन्यासां भाषाणां विस्तारशैली परिशीलनीया। यथा हिन्दीभाषा आङ्ग्लभाषा आञ्चलिकभाषाश्च द्रुतप्रसारिताः दरीदृश्यन्ते। तथैव संस्कृतस्य पाठ्यक्रमनिर्माणेऽपि आङ्ग्लभाषाप्रसारस्य ये उपायाः तैः भाषातत्त्वविद्भिः आश्रिताः, ते उपायाः अस्माभिरपि स्मर्तव्याः। तत्तद्भाषाशिक्षा तत्तद्भाषामाध्यमेनैव विधेया अन्यथा भाषाशिक्षा सम्पूर्णा न भवेत्। कनवेण्ट-प्रभृतिविद्यालयेषु आङ्ग्लभाषामाध्यमेन पाठनं सम्भाषणादिकं सर्वं व्यवहारमाङ्ग्लमाध्यमेनैव भवति, अतः तत्रत्याः

छात्राः धाराप्रवाहमाङ्ग्लभाषया व्यवहरन्ति। कारणं तत्र तत्तद् शिक्षानुकूलं वातावरणमस्ति। यदि आङ्ग्लभाषाशिक्षा संस्कृतभाषामाध्यमेन प्रचलेत्, तर्हि आङ्ग्लभाषाशिक्षा किं सम्पूर्णा भवेत्? नैव।

अतः संस्कृतभाषामाध्यमेनैव संस्कृतशिक्षाव्यवस्था परिचालनीया। तत्र प्रमाणं "संस्कृतसम्भाषणशिविरम्"। शिविरेऽखण्डसंस्कृतमयवातावरणे संस्कृतभाषानभिज्ञाः अपि अल्पेनैव कालेन निर्बाधं संस्कृतेन व्यवहरन्ति। अर्थात् तत्र प्रातःप्रभृति नैशशयनं यावत् सर्वदा सर्वविधभावविनिमयविधौ संस्कृतमाश्रयन्ति शिविरार्थिनः। संस्कृतशिक्षाविधौ बह्व्यः समस्याः परिदृश्यन्ते। तत्र विज्ञानप्रयुक्तिविद्याप्रकर्षेऽस्मिन् समये प्रायेण सर्वेषामेव जनानां संस्कृतशिक्षां प्रति वैमुख्यं परिदृश्यते। इयमेव प्रधनतमा समस्या। अस्याः एव समस्यायाः फलरूपेण समस्यान्तराणि आपतितानि। तथाहि शिक्षाव्यवस्थायां संस्कृतं भवति समुपेक्षितम्। तथपि, ये तावत् छात्राः कथं कथमपि आधुनिकपद्धत्यनुसारिणः प्राचीनपद्धत्यनुसारिणो वा संस्कृतस्याध्ययनार्थं समागच्छन्ति तेषु बहूनां मेधाविता न तथा विद्यते, अतश्च विद्याचर्चा समुज्ज्वला न भवति। अतः छात्राणां ग्रहणं धारणं सामर्थ्यमाधारीकृत्य पाठ्यक्रमस्य विरचनं भवेत्।

विद्यालयस्तरे संस्कृतस्य पठनपाठनमनिवार्य्यं करणीयम्। तेन मूलं सुदृढं भवेत्। नोचेत् "छिन्नेमूले नैव शाखा न पत्रम्।" अपि च संस्कृतविषये सुकृतित्वप्राप्तोपाधिकानां कृते अध्यापनादिकर्मक्षेत्रस्य प्रसारणं कर्त्तव्यम्। तादृशानां कृतविद्यानां कृते कर्मसंस्थानस्य क्षेत्रं क्रमशः सङ्कुचितं जायते। विषयोऽयं पश्चिमबङ्गमवलम्ब्य विशदीकर्त्तुमिष्यते। पूर्वमुच्चमाध्यमिकविद्यालयेषु संस्कृतशिक्षकाणां कृते पदद्वयमनुमोदितमासीत्। इदानीं तादृशेषु बहुषु विद्यालयेषु विश्वविद्यालयेष्वपि सर्वेषामपि संस्कृताध्यापकानां पदपूर्त्तिः न क्रियते।

किञ्च बहुत्र संस्कृतशिक्षकाणां पदं शून्यतां गतम्। प्रदेशेऽस्माकं प्राचीनैतिह्यानुसारिणी या संस्कृतशिक्षाव्यवस्था विद्यते, तस्याः अपि दुर्दशा चरमसीमानमारूढा। तत्र नियमतः प्रतिवर्षं परीक्षा न गृह्यते। चतुष्पाठीगतानामध्यापकानां कृते कापि वेतनव्यवस्था न निर्धारिता। एतासां समस्यानां समाधानोपायाः अस्माकं पुरतः एवं प्रतिभान्ति।

प्रथमतः- संस्कृतस्य स्वरूपविषये, तस्य गौरवविषये, तस्य युगोपयोगित्वविषये च भारतवर्षस्यास्य सर्वेषु प्रान्तेषु प्रचलितस्य सम्भाषणशिविरपाठ्यक्रमस्य स्तरानुसारं निर्माय शिविरमाध्यमेनैव जनानां प्रतिबोधनं विधेयम्। तथा सति संस्कृतशिक्षापरिमण्डले गतिसञ्चारो भवेत्। संस्कृतस्य युगोपयोगित्वे गौरववैभवे सुप्रतिष्ठिते संस्कृतं प्रति सर्वेषामाग्रहो जायेत।

द्वितीयतः- शिक्षाव्यवस्था केन्द्रसर्वकाराधिकारे रक्षणीया न केन्द्रराज्यद्वैताधिकारे। ततश्च देशस्य सर्वेषु प्रदेशेषु अभिन्नः पाठ्यक्रमो रचनीयः। यत्र संस्कृतस्य विशिष्टा भूमिका तिष्ठेत्।

तृतीयतः- विज्ञानचिकित्सादिपाठ्यविषयाणामपि विश्वविद्यालयस्तरे पाठ्यक्रमे संस्कृतस्य कृते न्यूनतया शताङ्कपरिमितं पत्रमेकमावश्यकविधया संस्थापपनीयम्, येन ते ते छात्राः तत्तद्विषये प्राचीनभारतीयया मनस्वितया सह परिचिताः भवेयुः।

चतुर्थतः- संस्कृतविषये यथा मेधाविनश्छात्राः समागच्छेयुः, तदर्थं लोभनीया वृत्तिव्यवस्था प्रवर्तनीया। परिसमाप्ताध्ययनानां संस्कृतज्ञानां कृते कर्मसंस्थानस्य क्षेत्रं प्रर्याप्ततया संरक्षणीयम्।

पञ्चमतः- संस्कृतविषये गवेषणायाः क्षेत्रं सम्प्रसार्य्य कृतविद्याविद्यार्थिनः गवेषणाविधौ पर्याप्तवृत्तिप्रदानमाध्यमेन प्रोत्साहनीयाः। एवमादयः बहवः समाधानोपायाः भवितुमर्हन्ति। अत्र दिङ्मात्रमस्माभिः प्रदर्शितम्, संस्कृतशिक्षां प्रति फलवती वास्तवोचिता प्रेमानुभूतिः मनसि सर्वैपोषणीया, विशेषतः ये तावत्

संस्कृतस्याध्यापनाविधौ विनियुक्ताः, ततश्च तैरन्येषामपि चेतःसु संस्कृतानुरागो जागरणीयः। ततश्च तैः सम्भूय कार्यतन्त्राणि विविधानि ग्रहीतव्यानि। तद्यथा- स्थानीयशिक्षाप्रतिष्ठानानां सहायमाश्रित्य तत्रत्यानां विशिष्टानां जनानाञ्चानुकुल्यमवलम्ब्य संस्कृतसम्भाषणशिविराणि नियमतो आयोजनीयानि। संस्कृतप्रतिष्ठानेषु शिक्षावर्षस्यारम्भे निश्चितरूपेण स्तरानुसारं सम्भाषणशिविरमायोजनं विधेयम्।

संस्कृतपठने रुच्युत्पादनाय बाल्यकालादेव बालकानां मनसि संस्कृतस्य वीजवपनं विधेयम्। बाल्ये वयसि कथाश्रवणाय शिशूनां महती प्रवृत्तिः परिलक्ष्यते। शिशूनां तादृशप्रवृत्तेश्चरितार्थतासम्पदनार्थं संस्कृताश्रितानां कथानामनुवादस्तत्तत्मातृभाषासु विधातव्यः। कथायाः साररूपेण सरलः नीतिश्लोकः संस्कृतभाषामयः तत्र संस्थापनीयः। तादृशः श्लोकः सुखेनैव बालकानां स्मृतिलग्नो भवेत्, एवं क्रमेण बहवः संस्कृतश्लोकाः तैरवलीलया कण्ठस्थीकृताः भवेयुः। एवं संस्कृतमयीनां ध्वनिमुद्रिकानां श्रवणे तथा तादृशीनां रूपवाणीमुद्रिकानां दर्शनादौ च यथा शिशवः समाकृष्टाः भवेयुः तदर्थं दृष्टिर्देया। एतादृशव्यवस्थायास्तथा संयोजनं विधेयं यथा तत्र वयोनिर्विशेषं सर्वेषामेव नागरिकाणां चेतः समाकृष्टं भवेत्। सामान्यतः इयमेव संस्कृतप्रचारपद्धतिः, पूर्वमया उक्तं बहुषु प्रदेशेषु विविधाः पाठ्यक्रमाः दृश्यन्ते, तेषामेकताविधानं विधेयम्। अस्माकं मतन्तु सर्वैर्राष्ट्रियसंस्कृतसंस्थाननिर्देशिता पदवी समनुसरणीया।

द्वादशकक्षां यावत् संस्कृतभाषाशिक्षायां छात्राणां विशेषः प्रयत्नः स्यात्। सम्यक्तया भाषाशिक्षायाः अनन्तरं शास्त्रशिक्षणं नाम (विषयप्रवेशः) विधेयम्। शास्त्रेषु प्रगाढपाण्डित्यं साधयितुं गुरुकुलपाठधारायाः बहुलीकरणं विधेयम्।

संस्कृतभाषा यथाधुनिकानां सर्वविधानां भावानामभिव्यक्तौ सावलीला भवेत् तदर्थं दृष्टिर्देया। विज्ञानादिविषयमवलम्ब्य यथा संस्कृतग्रन्थाः निर्मिताः भवेयुः तथा योजना ग्रहीतव्या। प्रादेशिकभाषायां संस्कृतभाषामयम् अभिधानं प्रतिप्रदेशं विरचनीयम्। पाठ्यसामग्रीणां निर्माणं करणीयम्। प्रत्यक्षशिक्षणपद्धतौ यानि अपेक्षितानि वस्तूनि सन्ति, तेषां वस्तूनां निर्माणं विधेयम्।

संस्कृतशिक्षायाः प्रसारार्थं प्रयुक्तेः व्यवहारः करणीयः। चलच्चित्रं, नाटकं, धरावाहिकरूपेण कालजितनाटकानां प्रदर्शनम्, चित्रित्रं बहुवर्णयुक्तं रुचिकरपुस्तकानां विरचनम्। आयुर्वेद-ज्योतिर्विद्या-कर्मकाण्डनाट्यशास्त्र-दर्शनप्रभृतीनां प्रयोगार्थं शालाः कर्त्तव्याः। आधुनिकसंस्कृतशिक्षायाः कृते अवलम्बमानाया पद्धतेः केचन विन्दवः यथा-

१.निर्दिष्टपरिसरे विभिन्नेषु प्रान्तेषु गुरुकुलप्रथायाः यथोचितं परिपालनम्।

२.आधुनिकविषयाणां मिश्रणं विधाय प्राचीनपद्धत्यनुसारिण्याः संस्कृतशिक्षा -धारायाः प्रवर्तनम्।

३.माध्यमिकस्तरे संस्कृतशिक्षायाः अनिवार्यरूपेण ग्रहणम्।

४.ततः पूर्वम्, अर्थात्- तृतीयकक्षातः संस्कृतशिक्षायाः ग्रहणानुकूल-मानसिकता सम्पादनम्।

५.कलाविभागे एकादशद्वादशकक्षयोरपि संस्कृतस्य अवश्यपाठ्यताविधानम्।

६.महाविद्यालय-विश्वविद्यालयस्तरे विज्ञानादिविभागेष्वपि शतसङ्ख्यक-मानान्वितं पत्रमेकं संस्कृतस्य कृते रक्षणीयम्।

७. सर्वभारतीयसेवापरीक्षासु संस्कृतस्य स्थानम् आवश्यकविधया रक्षणीयम्।

८. गवेषणादिकार्य्येषु अपि गवेषकाः यथा तत्तद्विषये प्राचीनभारतीयचिन्तनं जानीयुः। तदर्थं विधानमावश्यकतया रचनीयम्।

9. साधारणानां जनानां मानसे संस्कृतं प्रति यथा ममत्वबोधो जागरणीयः स्यात्, तदर्थमाधुनिकवैद्युतिकप्रमोदमाध्यमस्य उपयोगः करणीयः।

१०. सरलसंस्कृतभाषया काव्य-नाटकादिपाठ्यविषयविरचनम्, तेषां पाठ्यसूच्यामन्तर्भावनम्।

११. सर्वासु कक्षासु संस्कृतभाषामाध्यमेनैवपठनपाठनविधि-प्रवर्तनम्।

१२. द्वादशश्रेणीपर्यन्तं पाठ्यक्रमे भाषाशिक्षां प्रति गौरवाधानम्। अनन्तरं परवर्तिनीषु श्रेणीषु विषयशिक्षणे गौरवारोपणम्।

१३. आधुनिकवैज्ञानिकैः प्रयुक्तिविद्भिर्सह संस्कृतज्ञानां ज्ञानाधारक-संयोगसाधनम्।

१४. चिकित्साविज्ञानादिषु भारतीयप्रज्ञायाः बौद्धिकस्वामित्वस्य संरक्षणं - प्रतिष्ठापनार्थञ्च प्रकल्पविरचनम्।

१५. प्रतिवर्षं सर्वस्तरीयानां संस्कृतशिक्षकाणां शिक्षाक्रमपर्य्यालोचनादि-विषयमाधारीकृत्य सर्वभारतीयं सम्मेलनम्।

एवमादिभिः प्रक्रियासमुदायैः संस्कृतशिक्षायाः प्रचारः प्रसारः पुनरुज्जीवनं च निश्चप्रचं विधेयानि।

एतदेव स्मर्तव्यं यत् ऐतिह्यं परित्यज्य नवीनसंस्कारायोजनं समुन्नतिविधानञ्च शून्ये सौधनिर्माणवत् प्रतिभाति। आधुनिके भारतवर्षे यः खलु विच्छिन्नतावादः सर्वत्र परिलक्ष्यते यः खलु उग्रतमा प्रादेशिकताभिमानिता इतस्ततो दरीदृश्यते राजनैतिकदलानां या खलु गोष्ठीस्वार्थतन्त्रता व्यक्तिस्वार्थलोलुपता च दैशिकराजकीयपरिमण्डलं विदूषयतः तासां सर्वासां समस्यानां यथोचितसमाधानाय भौगलिकस्वाधीनतया सह सांस्कृतिकस्वाधीनतायाः सुसमञ्जसं सम्मेलनं

विधाय भारतवर्षस्य समुन्नयनविधौ संस्कृतशिक्षायाः समयोपयोगिनी नवीनेऽयं पद्धतिः नूनमेव समाश्रयणीया, नान्यः पन्थाः विद्यतेऽयनाय॥

आयान्तु सर्वतः सर्वे, दिग्दर्शनाय शाश्वतम्।
लोकभाषां समाश्रित्य, कुर्वन्तु लोकमङ्गलम्॥



# लेखकपरिचितिः

श्रीतन्मयकुमारभट्टाचार्यः श्रीसत्यपदभट्टाचार्यस्य श्रीमत्या अन्नपूर्णादेव्याश्च द्वितीयपुत्ररूपेण १९७१ ईशवीयसंवत्सरे मार्चमासस्य सप्तमे दिनाङ्के कलिकातायामजायत। पारम्परिकसंस्कृतस्य पठनपाठने प्रचारप्रसारे च नितरां सुदक्षोऽयं प्रायोगिकं संस्कृतं नीत्वापि परीक्षां निरीक्षां कृतवान्। अयं तावत् 'विश्वसंस्कृतौ स्वामिनो विवेकानन्दस्य योगदान'विषये आचार्यस्य रमारञ्जनमुखोपाध्यायस्य मार्गदर्शनेन गवेषणां कृतवान्। काश्चन रवीन्द्रकथा एतेन अनूदिता याः कवीन्द्रकथाकल्लोलिनी ग्रन्थे प्रकाशिताः। सरलतरलसंस्कृतस्य आधुनिकशैल्या प्रचुरप्रचाराय अस्याभिनिवेशः श्लाघनीयोऽस्ति। एतत्सर्वं तन्नाम देश-धर्म-संस्कृत-संस्कृति-भारतीयास्मिताप्रभृतयस्तस्य काव्येषु सुखलभ्या विन्दवः सन्ति। बहुश्रुतस्य बहुपाठिनोऽस्य प्रबन्धा यथा ज्ञानगर्भाः काव्यानि तथा रसमयानि उत्प्रेरकाणि च सन्ति। अनेन लिखितानि पुस्तकानि एवं सन्ति–

- **विश्वसंस्कृतौ स्वामिनो विवेकानन्दस्य योगदानम्**
- **संस्कृतसाहित्ये आचार्यस्य सीतानाथशास्त्रिणो योगदानम्**
- **कवीन्द्रकथाकल्लोलिनी**
- **संस्कृतशिक्षा**
- **वङ्गीयानां संस्कृतकाव्यामृतम्।**

❖❖❖